आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः

( ७३ )



श्रीमच्छंकराचार्यविरचिता

घारे इत्युपान्हशंकरसूरिविरचिता

च

# गायत्रीपुरश्चरणपद्धतिः ।



मूल्यं–रूपकचतुष्टयम् (~~४–००~~) ५/–

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७३

श्रीमच्छंकराचार्यविरचिता घारेइत्युपनामक
शंकरसूरिविरचिता च

# गायत्रीपुरश्चरणपद्धतिः ।

---

वे० शा० रा० वैद्यइत्युपनामकरङ्गनाथशास्त्रिभिः
संशोधिता ।

सा च

रावबहादूर इत्युपपदधारिभिः

गङ्गाधर बापूराव काळे,
जे. पी.

इत्येतैः

पुण्याख्यपत्तने
श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा

१८८८ शालिवाहनशकाब्दस्य माघवद्याङ्गारिकाचतुर्थ्यां
खिस्ताब्दाः १९६६ ।
प्रकाशिता ।

तृतीयावृत्तिः ।



मूल्यं रूपकचतुष्कम् ( रु० [illegible]० )

# आदर्शपुस्तकोल्लेखपत्रिका ।

अनयोर्गायत्रीपुरश्चरणपद्धत्योः पुस्तके यैः परहितैकपरतया प्रदत्ते तेषां नामादि प्रदर्श्यंते—

१ शंकराचार्यविरचिता गायत्रीपुरश्चरणपद्धतिः, रा० रा० हरि बाबाजी करंबेलकर इत्येतेषाम् । अस्या लेखनकालः शकः १७५६ जयनामसंवत्सरः ।

१ घारे इत्युपनामकशंकरसूरिविरचिता गायत्रीपुरश्चरणपद्धतिरानन्दाश्रमस्था । अस्या लेखनकालः शकः १७०१ विकारिनामसंवत्सरः ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

श्रीमच्छंकराचार्यविरचिता ।

# गायत्रीपुरश्चरणपद्धति

सवितारं प्रणम्याऽऽदौ सावित्रीं श्रीगुरुं मुनीन् ।
विश्वामित्रं वसिष्ठं च गायत्रीपद्धतिं ब्रुवे ॥ १ ॥

## अथ गुरुध्यानम् ।

तत्र श्रीमान्सावित्रीमन्त्रोपासकः प्रातःसंध्यापूर्वकदण्डद्वयात्मके रात्रेस्तुरीययामात्मके वा ब्राह्ममुहूर्ते शय्यायाः समुत्थाय रात्रिवासस्त्यक्त्वाऽन्यवाससी परिधाय तात्कालिकमावश्यकं कृत्वा शुचिराचान्तः शुभासनमास्थाय स्वशिरसि सहस्रारकमलकर्णिकायां योगपीठोपरि निजगुरुं ध्यायेत् । तद्यथा–

ब्रह्मरन्ध्रे सिते पद्मे सहस्रदलशोभिते ।
श्रीगुरुं परमात्मानं व्याख्यामुद्रालसत्करम् ॥ १ ॥
त्रिनेत्रं द्विभुजं स्मेरं कर्पूरशकलोज्ज्वलम् ।
पद्मासनं सदा प्रातर्ध्यायेदखिलसिद्धिदम् ॥ २ ॥

इति ध्यात्वा मानसैरुपचारैः पूजयित्वा–

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ३ ॥
नमोऽस्तु गुरवे तस्मै गायत्रीरूपिणे सदा ।
यस्य वागमृतं हन्ति विषं संसारसंज्ञकम् ॥ ४ ॥

इत्यनेन प्रणमेत् । ततस्तच्चरणारविन्दनिस्यन्दमकरन्दधाराभिरात्मदेहमभिषिक्तं भावयेत् । ततस्तत्रैव श्रीगुरो क्षमस्वेति विसर्जयेदिति गुरुध्यानम् ।

## अथ प्राणायामविधिः ।

ततो मूलमन्त्रेण प्राणायामत्रयं कुर्यात् । तद्यथा–स प्राणायामः पूरककुम्भकरेचकाङ्गत्रयात्मकस्तथाचोक्तम्–

अङ्गत्रयात्मकः [ प्रोक्तः ] पूररेचककुम्भकैः ॥ इति ।

तत्स्वरूपमाह विश्वामित्रसंहितायाम्–

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥ १ ॥

दक्षिणे रेचकं कुर्याद्वामेनाऽऽपूरितोदरः ।
कुम्भकेन त्रिरावृत्त्या प्राणायामस्य लक्षणम् ॥ २ ॥

दशप्रणवसंयुक्तां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ ३ ॥

उच्चारयंस्तु प्रणवं श्वासेनैकेन मन्त्रवित् ।
उदरं पूरयित्वा तु वायुना रदमास्थितः ( ? ) ॥ ४ ॥

प्राणायामो भवत्येवं पूरको देहपूरकः ।
पिधाय सर्वगात्राणि श्वासोच्छ्वासविवर्जितः ॥ ५ ॥

संपूर्णकुम्भवत्तिष्ठेत्प्राणायामः स कुम्भकः ।
मुञ्चेद्वायुं तथैकेन श्वासेनानेन मन्त्रविन् ॥ ६ ॥

निःश्वासयोगयुक्तं च वायुं बाह्येन रेचयेत् ।
रेचकस्त्वेष संप्रोक्तः प्राणायामो न संशयः ॥ ७ ॥ इति ।

स च मूलेन तदशक्तौ प्रणवेन कार्यः ।

प्राणायामत्रयं कुर्यान्मूलेन प्रणवेन वा ।

इति तत्रैवोक्तत्वात् । तत्क्रममाह वसिष्ठसंहितायाम्–

आसने सम्यगासीनो वामेनाऽऽपूर्य चोदरम् ।
कुम्भकेन त्रिरावृत्त्या दक्षिणेन तु रेचयेत् ॥

तद्यथा विहितपद्मासनः स्वस्तिकासनो वा मूलाधारार्पितचित्तवृत्ति सावित्रीं प्रणवं वा समुच्चारयन्निडया वामनाड्या शनैः शनैर्वायुमापूर्य मूला धारं प्रपद्य ङ्गुष्ठकनिष्ठिकाभिर्नासापुटे विधृत्य दशप्रणवसंयुक्तां गायत्रीं दशवा प्रणवं वा जपंस्तं वायुं स्तम्भयित्वा पिङ्गलया दक्षिणनाड्या शनैः शनैस्तं वा रेचयेदित्येकः प्राणायामः । पुनस्तथैव पिङ्गलया वायुं शनैः शनैः समाकृ तथैव कुम्भयित्वा तथैवेडया रेचयेदित्यन्यः । एवं वैपरीत्येन–

येनैव संत्यजेत्तेन पूरयेद्धारयेत्ततः ।
रेचयेच्च ततोऽन्येन शनैरेवं पुनः पुनः ॥ १ ॥

इति योगयुक्ताभ्यासेन त्रीन्प्राणायामान्विधाय शरीरं निर्मलं भावयेत् । इत्येवं सर्वत्र कर्मादौ कर्मान्ते च । तथा चोक्तम्—

ततः शास्त्रोक्तमार्गेण प्राणायामं समाचरेत् ।
त्रिषड्द्वादशवारं वा पुरतः परतो जपात् ॥ १ ॥ इति ।

तथा -

शुचिः प्राणायामान्प्रणवसहितान्षोडश वशी
प्रभाते सायं च प्रतिदिवसमेवं वितनुते ।
द्विजो यस्तं भ्रूणप्रहरणकृद[ म्भो ]भिकलितं
पुनन्त्येते मासादिह दुरिततूलौघदहनाः ॥ १ ॥
गायन्त्यमी षड्भिरपीह मासैर्जन्मान्तरोपार्जितपापपुञ्जान् ।
संवत्सराद्ब्रह्मपदं तदेकं प्रकाशयन्त्येव यदस्त्युदाख्यम् ॥ २ ॥

इति विश्वामित्रसंहितायाम् । प्रणवमात्रा तु तन्मन्त्रोच्चारणोपलक्षितः कालविशेषः ।

जानुं प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
क्रियते चाङ्गुलिस्फोटः सा मात्रा परिकीर्तिता ॥ १ ॥

इत्युक्तं वसिष्ठसंहितायाम् । इति प्राणायामविधिः ।

अथ गायत्रीयोगध्यानं कुर्यात् । ततो मलाधारे त्रिकोणं कामं बालार्कवर्णं सत्त्वरजस्तमोगुणाक्रान्तं बिन्दुं संचिन्त्य तदूर्ध्वे कुण्डलिनीशक्तिं चिद्रूपां तडिदाभां मृणालान्तरालतन्तुतुल्यां प्रसुप्तभुजगाकारां सार्धत्रिवलयेन स्थितां मनोदण्डेनोत्थाप्य ॐकारेण गुरूपदिष्टेन विधिना सुषुम्नामार्गेण मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्ध्याज्ञाख्यषट्चक्रभेदक्रमेण शिरःस्थिताधोमुखसहस्रदलकमलं नीत्वा तत्र स्थितचन्द्रमण्डलाद्विगलितामृतधारयाऽऽरक्तया वर्णमय्या तां कुण्डलिनीं संतर्प्य तां विशुद्ध्यादिक्रमेण पुनर्मूलाधारं नयेत् । इति योगं विधाय मन्त्रयोगं विदध्यात् । तद्यथामूलाधाराद्ब्रह्मरन्ध्रान्तं मूलविद्यां गायत्री-

मुद्यद्दिनकराभां विभाव्य तदात्मानमात्मानं मन्येतेति मन्त्रयोगः । ततो हृदयकमले वक्ष्यमाणध्यानेन यथोक्तरूपां सावित्रीं भगवतीं ध्यात्वा तत्प्रभापाटलमग्रे वक्ष्यमाणक्रमेण गायत्र्या ऋष्यादिन्यासपूर्वकं मानसं पूजयित्वा मन्त्रगुरुदेवतात्मकत्वेनाऽऽत्मानं भावयन्यथाशक्ति गायत्रीजपसमर्थः स्तुत्वा नत्वा देवीमाज्ञां प्रार्थयेत्––

त्रैलोक्यचैतन्यमासि त्रिशक्ते वागीश्वरि त्वच्चरणाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ॥ २ ॥

जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ।
त्वया हृषीकेश हृदिस्थयाऽहं यथा नियुक्तोऽस्मि तथा करोमि ॥२॥

इत्याज्ञां प्रार्थ्य–

प्रातःप्रभृति सायान्तं सायादि प्रातरन्ततः ।
यत्करोमि जगद्योने तत( द )स्तु तव पूजनम् ॥

इत्यनेन सर्वं सवितृरूपिण्यै देव्यै गायत्र्यै समर्प्य देवतारूपो भूत्वा भूमिं प्रार्थयेत् । तद्यथा–

समुद्रमेखले देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ ३ ॥

इत्यनेन प्रार्थ्य श्वासानुसारेण भूमौ पादं निधाय गृहाद्बहिरपराजितायां दिशि मलमूत्रोत्सर्गार्थं गच्छेत् । इति प्रातर्निष्क्रमणविधिः ।

ततः स्मृत्युक्तविधिना मलमूत्रोत्सर्गं शौचाचमनं [ च ] कृत्वा तान्त्रिकमन्त्रेण दन्तधावनं कुर्यात् । तद्यथा स्मृत्युक्तविधिना निषिद्धेतरकाष्ठेन तृणपर्णादिभिर्वा प्राङ्मुखो वाऽप्युदङ्मुखो वा मौनी–

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ ४ ॥

इति स्मृत्युक्तमन्त्रपुरःसरं क्लीं कामदेवाय सर्वजनप्रियाय नम इत्यनेन काष्ठमभिमन्त्र्य तेन च प्रादक्षिण्येन दन्तधावनं विधाय तत्काष्ठं प्रक्षाल्य शुचौ देशेऽग्रतस्त्यजेत् । ततो मूलेन मुखं प्रक्षाल्य द्विराचमनं कुर्यात् । तद्यथा––

शौचाचारे तथा पाने स्पृष्टास्पृष्टौ च चर्वणे ।
पौराणाचमनं कुर्यान्नामभिः केशवादिभिः ॥ १ ॥
संध्यायां कर्मकाले च स्मृतेराचमनं भवेत् ।
ब्रह्मयज्ञे तु वै कुर्याद्दङ्गनामपूर्वकं द्विजः ॥ २ ॥
गायत्रीमन्त्रजप्यादौ देव्याः पादैः पृथक् पृथक् ।
पाञ्चभौतिकमन्त्रेण भूतशुद्धौ समीरितम् ॥ ३ ॥
प्राणप्रतिष्ठासमये ह्यात्मतत्त्वादिभिः पिबेत् ।
तथैव मातृकान्यासे सर्वकर्मसु मूलतः ॥ ४ ॥
गोकर्णाकृतिहस्तेन माषमग्नजलं पिबेत् ।
तन्न्यूनमधिकं पीत्वा पुनराचमनं भवेत् ॥ ५ ॥
अङ्गुष्ठाग्रं समाकुच्य मध्यमामध्यपर्वणि ।
गोकर्णं तद्धि विज्ञेयं सर्वेष्वाचमनेष्विह ॥ ६ ॥
संहताङ्गुलिहस्तेन गृहीत्वा चाम्बु वीक्षितम् ।
मुक्ताङ्गुष्ठकनिष्ठं च त्रिः पिबेद्ब्रह्मतीर्थतः ॥ ७ ॥
शीतलं निर्मलं चाम्बु मधुरं क्षारवर्जितम् ।
ग्राह्यमाचमने स्नाने दैवे पित्र्ये च कर्मणि ॥ ८ ॥

## तत्र पुराणाचमनम्–

केशवादित्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ।
गण्डोष्ठौ संमृजेद्द्वाभ्यां द्विरेकैकं पाणिपादयोः ॥ ९ ॥
मूर्ध्नि चैकं वचस्येकं नासाक्ष्णोः कर्णयोर्द्वयोः ।
नाभौ हृदि शिरस्येवं स्पृशेद्बाहुद्वयं क्रमात् ॥ १० ॥
ओंकारपूर्वकं नाम ङेन्तं संबोधनं तु वा ।
चतुर्विंशतिसंख्याकैर्नामभिः केशवादिभिः ॥ ११ ॥
स्वाहान्तं प्राशयेद्वारि नमोन्तं स्पर्शयेदथ ।
प्रक्षाल्य हस्तौ पीत्वाऽथ सकृदोष्ठावतः परम् ॥ १२ ॥

संहताङ्गुलिमूलेन द्विः प्रमृज्यात्ततो मुखम् ।
स्पृष्ट्वा करावभिमृशेत्संहताङ्गुलिभिर्जलम् ॥ १३ ॥
अद्भिर्वामकरं सिच्य ताभिः पादौ च संस्पृशेत् ।
अङ्गुल्यग्रैस्त्रिभिर्मध्यैरास्योर्ध्वं समुपस्पृशेत् ॥ १४ ॥
मध्ये मध्ये जलं स्पृष्ट्वा स्पृशेन्नासादिकान्क्रमात् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं चैवमुपस्पृशेत् ॥ १५ ॥
अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रोत्रं पुनः पुनः ।
अङ्गुष्ठोपकनिष्ठाभ्यां नाभिं पश्चादुपस्पृशेत् ॥ १६ ॥
तलेन हृदयं स्पृष्ट्वा स्पृशेदङ्गुलिभिः शिरः ।
अङ्गुल्यग्रैर्दक्षिणादिबाहुमूलद्वयं स्पृशेत् ॥ १७ ॥
अनेन विधिना विप्रः कुर्यादाचमनं सदा ॥ १८ ॥

## अथ मन्त्राचमनम्-

देव्याः पादैस्त्रिभिः पीत्वा अब्लिङ्गैर्नवभिः स्पृशेत् ।
सप्तव्याहृतिभिश्चैव शिरोमन्त्रैः स्पृशेत्क्रमात् ॥ १९ ॥

इत्याचम्य शिखाबन्धं कुर्यात् । स चोक्तो विश्वामित्रसंहितायाम्-

शिखायां ब्रह्मग्रन्थिस्तु प्रोक्ता संध्यादिकर्मसु ।
रुद्रग्रन्थिस्तथा शैवे कर्मणि द्विजसत्तम ॥ २० ॥
वैष्णवे विष्णुग्रथनमुक्तं वै प्रेतकर्मणि ।
स्वशाखोक्तशिखा धार्या उक्तस्थाने द्विजोत्तमैः ॥ २१ ॥
विट्शूद्रक्षत्रियैरेका न धार्या यतिभिः सदा ।
शिखाधस्तात्परावृत्य वामतो दक्षिणेन तु ॥ २२ ॥
ग्रन्थिच्छिद्रेऽग्रमावेश्य ब्रह्मग्रन्थिः प्रकीर्तिता ।
केवलं बन्धनं रौद्री द्विरावृत्तस्तु वैष्णवी ॥ २३ ॥
गुरूपदिष्टविधिना शिखाबन्धं समाचरेत् ।
शिखाबन्धं विना कर्म न सिध्यति फलार्थिनः ॥ २४ ॥
प्राणायामं विना जप्यं बीजमुप्तं यथोषरे ।
वृथाऽऽसनादृते ध्यानं हुतं गुप्तं कृतं च यत् ॥ २५ ॥

तस्मात्सर्वप्रयत्नेन फलार्थी साधकोत्तमः ।
आसनं प्राणसंरोधं शिखाबन्धं समाचरेत् ॥ २६ ॥

## अथाऽऽसनलक्षणम्

वसिष्ठसंहितायाम्-

मेढ्रादुपरि निक्षिप्य सव्यगुल्फं तथोपरि ।
गुल्फान्तरं च निक्षिप्य सिद्धासनमुदीरितम् ।
उत्तानौ चरणो कृत्वा ऊरुसंस्थौ प्रयत्नतः ।
ऊरुमध्ये तथोत्तानौ पाणी पद्मासनं त्विदम् ॥ २ ॥
जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ॥ ३ ॥

इति प्रसङ्गत आसनलक्षणम् ।

## अथ स्नानविधिः ।

एवं द्विराचम्य शुचिर्देव्यात्मा स्नानाय नद्यादौ गच्छेत् । तत्राङ्गास्त्रमन्त्रेण तीरं प्रक्षाल्य स्नानीयं स्थापयित्वा मलस्नानं विधाय स्वशाखोक्तमार्गेण वैदिकस्नानं पौराणिकं वा कृत्वा तान्त्रिकमाचरेदिति वसिष्ठसंहितावचनात् ।

अस्त्राङ्गमूलविद्याभिः स्नानं कुर्याद्यथाविधि ।

तद्यथा--नाभिमात्रोदके स्थित्वा गुर्वादिवन्दनपूर्वकं मूलमन्त्रेण प्राणायामत्रयं कृत्वा मूलमन्त्रस्य ऋष्यादिकरषडङ्गन्यासं विधाय गायत्रीरूपमात्मानं ध्यात्वा पुरतो मूलमन्त्रेण चतुर्हस्तमितं चतुरस्रं तीर्थं प्रकल्प्य तत्र-

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन्संनिधिं कुरु ॥

इत्यनेन तीर्थमन्त्रेणाङ्कुशमुद्रया सूर्यमण्डलात्तीर्थानि समावाह्य वमित्यमृतबीजेन धेनुमुद्रयाऽमृतीकृत्य कवचमन्त्रेणावगुण्ठयास्त्रमन्त्रेण छोटिकाभिः संरक्ष्य चक्रमुद्रां प्रदर्श्य गायत्र्याऽष्टधाऽभिमन्त्र्य तदुदके वक्ष्यमाणप्रकारेण गायत्रीयन्त्रं विभाव्य तदुपरि यथोक्तरूपां सावित्रीं ध्यात्वाऽऽवाहनादिकं

कृत्वा जलेनैव पूजयित्वा संस्नाप्य तच्चरणसृतं तीर्थं मत्वाऽङ्गुष्ठादिभिर ङ्गुलीभिः श्रोत्रादिद्वाराणि विधृत्य मनसा गायत्रीमुच्चरन्देव्याश्चरणतलेऽस्मिं स्तीर्थजले त्रिर्निमज्जेत् । ततो गायत्र्यैव द्वादशधा त्रिधा वा जलाञ्जली-न्स्वाशिरसि दद्यात् ॥ ततो मूलेनैव त्रिराचम्य मूलेनैव देवीं त्रिस्तर्पयित्वा संहा-रमुद्रया क्षमस्वेति देवीं हृदि विसृज्य तीर्थानि सूर्यमण्डले विसृजेदिति गायत्रीस्नानविधिः ।

ततो जलादुत्तीर्य मूलाभिमन्त्रिते धौते वाससी परिधाय मूलेनैव पूर्वोक्तल क्षणेन शिखां बद्ध्वा पूर्ववद्द्विराचम्य प्राणायामत्रयं कृत्वा तीर्थादिपवित्रमृदा दिना श्वेतोर्ध्वपुण्ड्रकं विधाय तदुपरि विहितभस्मना त्रिपुण्ड्रं यथास्थानं कुर्यात् ।

श्वेतमृद्नोर्ध्वपुण्ड्रं च भसितेन त्रिपुण्ड्रकम् ।
क्रमेण विप्रः कुर्वीत चन्दनेन यथारुचि ॥ १ ॥
तीर्थङ्मृदा चोर्ध्वपुण्ड्रं न कुर्याद्भस्मना द्विजः ।
यदि मोहात्प्रकुर्वीत नरकायोपपद्यते ॥ २ ॥
आदौ मृद्धारणं कुर्याद्भस्मना च ततः परम् ।
चन्दनं स्वेच्छया धार्यं तिर्यगूर्ध्वं च वर्तुलम् ॥ ३ ॥
संध्या ध्यानं तपो होमः स्वाध्यायो देवतार्चनम् ।
ऊर्ध्वपुण्ड्रं विना कर्म निष्फलं स्यादिति स्मृतिः ॥ ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा ।
विना भस्मत्रिपुण्ड्रेण न तिष्ठेज्ज्ञानवान्द्विजः ॥ ५ ॥

इतिविश्वामित्रसंहितायाम् । एवं त्रिपुण्ड्रोर्ध्वपुण्ड्रान्यतरं वा मूलमन्त्रेण सप्तधाऽभिमन्त्रितेन तिलकं विधाय वैदिकीं संध्यां स्वशाखोक्तमार्गेण विधाय गायत्रीजपं कुर्यात् । तत्र संध्याकालः-

उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते ।
सायंसंध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ १ ॥

उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥ २ ॥
उत्तमा सूर्यसहिता मध्यमा लुप्तभास्करा ।
अधमा ऋक्षसंयुक्ता सायंसंध्या त्रिधा मता ॥ ३ ॥
अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः ।
सा तु संध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः ॥ ४ ॥
संध्योत्तमा तृतीयेंऽशे पञ्चधांशे दिनस्य तु ।
माध्याह्निकी तदूर्ध्वं वा पूर्वं वा स्याद्दिवैव हि ॥ ५ ॥
संध्याकाले तु संप्राप्ते संध्या नैव ह्युपासिता ।
जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते ॥ ६ ॥
काले तु वन्दिता संध्या स्वर्गमोक्षप्रदायिनी ।
अकाले वन्दिता संध्या सा च संध्या वधूरिव ॥ ७ ॥

## काललोपप्रायश्चित्तम्–

संध्याकाले त्वतिक्रान्ते स्नात्वाऽऽचम्य यथाविधि ।
जपेदष्टोत्तरं देवीं ततः संध्यां समाचरेत ॥ १ ॥
जमदग्निः–एकाहं समतिक्रम्य प्रमादादकृतं यदि ।
अहोरात्रोषितो भूत्वा गायत्र्याश्चायुतं जपेत् ॥ २ ॥
राष्ट्रभङ्गे नृपक्षोभे रोगार्तौ सूतकेऽपि वा ।
संध्यावन्दनविच्छित्तिर्न दोषाय कथंचन ॥ ३ ॥
विद्वत्सङ्गे विवादे च यज्ञे भूपतिदर्शने ।
संध्यावन्दनलोपोऽयं न दोषो मुनिभिः स्मृतः ॥ ४ ॥

पूर्ववदाचम्य ऊर्ध्वकेशि विरूपाक्षीतिमन्त्रेण शिखां बद्ध्वा पुनर्गायत्र्या-स्त्रिपदैराचम्य दर्भधारणं कुर्यात् ।

तद्यथा–

कृत्वा जलेनैव पूजयित्वा संस्नाप्य तच्चरणसृतं तीर्थं मत्त्वाऽङ्गुष्ठादिभिर ङ्गुलीभिः श्रोत्रादिद्वाराणि विधृत्य मनसा गायत्रीमुच्चरन्देव्याश्चरणतलेऽस्मिं स्तीर्थजले त्रिर्निमज्जेत् । ततो गायत्र्यैव द्वादशधा त्रिधा वा जलाञ्जली-न्स्वशिरसि दद्यात् ॥ ततो मूलेनैव त्रिराचम्य मूलेनैव देवीं त्रिस्तर्पयित्वा संहा-रमुद्रया क्षमस्वेति देवीं हृदि विसृज्य तीर्थानि सूर्यमण्डले विसृजेदिति गायत्रीस्नानविधिः ।

ततो जलादुत्तीर्य मूलाभिमन्त्रिते धौते वाससी परिधाय मूलेनैव पूर्वोक्तल क्षणेन शिखां बद्ध्वा पूर्ववद्द्विराचम्य प्राणायामत्रयं कृत्वा तीर्थादिपवित्रमृदा दिना श्वेतोर्ध्वपुण्ड्रकं विधाय तदुपरि विहितभस्मना त्रिपुण्ड्रं यथास्थानं कुर्यात् ।

श्वेतमृद्नोर्ध्वपुण्ड्रं च भसितेन त्रिपुण्ड्रकम् ।
क्रमेण विप्रः कुर्वीत चन्दनेन यथारुचि ॥ १ ॥
तीर्यङ् मृदा चोर्ध्वपुण्ड्रं न कुर्याद्भस्मना द्विजः ।
यदि मोहात्प्रकुर्वीत नरकायोपपद्यते ॥ ॥
आदौ मृद्धारणं कुर्याद्भस्मना च ततः परम् ।
चन्दनं स्वेच्छया धार्यं तिर्यगूर्ध्वं च वर्तुलम् ॥ ३ ॥
संध्या ध्यानं तपो होमः स्वाध्यायो देवतार्चनम् ।
ऊर्ध्वपुण्ड्रं विना कर्म निष्फलं स्यादिति स्मृतिः ॥ ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा ।
विना भस्मत्रिपुण्ड्रेण न तिष्ठेज्ज्ञानवान्द्विजः ॥ ५ ॥

इतिविश्वामित्रसंहितायाम् । एवं त्रिपुण्ड्रोर्ध्वपुण्ड्रान्यतरं वा मूलमन्त्रेण सप्तधाऽभिमन्त्रितेन तिलकं विधाय वैदिकीं संध्यां स्वशाखोक्तमार्गेण विधाय गायत्रीजपं कुर्यात् । तत्र संध्याकालः-

उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते ।
सायंसंध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ १ ॥

उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥ २ ॥
उत्तमा सूर्यसहिता मध्यमा लुप्तभास्करा ।
अधमा ऋक्षसंयुक्ता सायंसंध्या त्रिधा मता ॥ ३ ॥
अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः ।
सा तु संध्या समाख्याना मुनिभिस्तत्त्वदर्शिभिः ॥ ४ ॥
संध्योत्तमा तृतीयेंऽशे पञ्चधांशे दिनस्य तु ।
माध्याह्निकी तदूर्ध्वं वा पूर्वं वा स्याद्दिवैव हि ॥ ५ ॥
संध्याकाले तु संप्राप्ते संध्या नैव ह्युपासिता ।
जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते ॥ ६ ॥
काले तु वन्दिता संध्या स्वर्गमोक्षप्रदायिनी ।
अकाले वन्दिता संध्या सा च संध्या वधूरिव ॥ ७ ॥

## काललोपप्रायाश्चित्तम्—

संध्याकाले त्वतिक्रान्ते स्नात्वाऽऽचम्य यथाविधि ।
जपेदष्टोत्तरं देवीं ततः संध्यां समाचरेत ॥ १ ॥
जमदग्निः—एकाहं समतिक्रम्य प्रमादादकृतं यदि ।
अहोरात्रोषितो भूत्वा गायत्र्याश्चायुतं जपेत् ॥ २ ॥
राष्ट्रभङ्गे नृपक्षोभे रोगार्तौ सूतकेऽपि वा ।
संध्यावन्दनविच्छित्तिर्न दोषाय कथंचन ॥ ३ ॥
विद्वत्सङ्गे विवादे च यज्ञे भूपतिदर्शने ।
संध्यावन्दनलोपोऽयं न दोषो मुनिभिः स्मृतः ॥ ४ ॥

पूर्ववदाचम्य ऊर्ध्वकेशि विरूपाक्षीतिमन्त्रेण शिखां बद्ध्वा पुनर्गायत्र्यास्त्रिपादैराचम्य दर्भधारणं कुर्यात् ।

तद्यथा—

दर्भद्वयेन बध्नीयाच्छिखां चैवोपवीतकम् ।
आसने कुक्षिदेशे च द्वौ द्वौ दर्भौ प्रकीर्तितौ ॥ १ ॥

दक्षिणानामिकायां च चतुर्दर्भपवित्रकम् ।
वामे दर्भत्रयं धार्यं संध्यायां द्विजसत्तमैः ॥ २ ॥

इति दर्भान्धारयित्वा प्राणायामान्कुर्यात् । तदुक्तं ब्रह्मसंहितायाम्–

कोष्ठस्थमनिलं सर्वं निःशेषं द्विजसत्तम ।
मूलाधारे मनः कृत्वा दक्षनाड्या विरेचयेत् ॥ १ ॥
सपच्छिरसमुच्चार्य सावित्रीं ब्रह्मरूपिणीम् ।
मनाड्याऽनिलं ब्रह्मध्यानेनाऽऽपूरयेच्छनैः ॥ २ ॥
कुम्भके पुनरुच्चार्य विष्णुध्यानं समाचरेत् ।
तथैव दक्षनाड्या च रुद्रध्यानं समाचरेत् ॥ ३ ॥
वायुं विरेचयेत्प्राज्ञः सावित्र्या पूर्वरूपया ।
इत्येकः प्राणरोधश्च द्वितीयः पूर्ववज्जपेत ॥ ४ ॥
येनैव संत्यजेत्तेन तथैवाऽऽपूरयेत्सुधीः ।
धारयेद्रेचयेत्तद्वच्छनैरेवं पुनः पुनः ॥ ५ ॥
एवं त्रिरसुरोधश्च जपादौ च जपान्तिके ।
वैदिके कर्मणि प्रोक्तः प्रायश्चित्ते यथेच्छया ॥ ६ ॥
भूरादिव्याहृतीः सप्त सतारा द्विजसत्तमः ।
गायत्रीमनुमुच्चार्य व्याहृत्या च समस्तया ॥ ७ ॥
चूडामन्त्रं तदन्ते च जपेत्प्रणवपूर्वकम् ।
एषा सपच्छिराः प्रोक्ता सावित्री प्राणरोधने ॥ ८ ॥
पञ्चाङ्गुलीभिर्नासाग्रपीडनं प्रणवाभिधा ।
मुद्रेयं सर्वपापघ्नी गृहस्थानां प्रशस्यते ॥ ९ ॥

अथ प्राणायामन्यासः ।

ॐ प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता दैवी गायत्रीछन्दः ॐ बीज

उं शक्तिः मं कीलकं विद्युद्वर्ण उदात्तः स्वरस्तालव्यं गोत्रं प्रणवमात्राणां वसिष्ठ-विश्वामित्रभरद्वाजा ऋषयो ब्रह्मविष्णुमहेश्वरा देवता गायत्रीत्रिष्टुब्जगत्यश्छदांसि भूरन्तरिक्षं द्यौः स्थानानि पीतविद्युच्छ्वेता वर्णा जाग्रत्स्वप्नसुषुप्तयोऽवस्थाः सप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः, अग्नि वायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवता गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जग त्यश्छन्दांसि श्वेतरक्तपीतकृष्णनीलपाटलपिङ्गलवर्णा. षड्जऋषभगान्धारमध्य मपञ्चमधैवतनिषादाः स्वराः पृथिव्यप्तेजोवाय्वाकाशप्राणात्मानो बीजानि श्रीकी-र्तिमायाधृतिमेधास्मृतिवाचः शक्तयो भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपो-लोकसत्यलोकाः कीलकानि आत्रिविश्यकाश्यपगौतमाङ्गिरसभार्गवकौशिकवासि-ष्ठगोत्राणि शब्दस्पर्शरूपरसगन्धमनोबुद्धयस्तत्त्वानि विततांञ्जलिशकटविस्तृतयम-पाशग्रथितव्यापकाञ्जलिका मुद्राः प्राणापानव्यानोदानसमानमनोबुद्धिजानितपापो-पशमनार्थे जपे विनियोगः । ॐ गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्रीछन्दः शिरोमन्त्रस्य ब्रह्मा ऋषिः परमात्मा देवताऽऽसुरीगायत्रीछन्दः सर्वेषां प्राणायामे विनियोगः ॐ अं नाभौ ॐ उं हृदये ॐ मं मुखे ॐ भूः पादयोः ॐ भुवः जान्वोः ॐ स्वः गुह्ये ॐ महः नाभौ ॐ जनः हृदये ॐ तपः कण्ठे ॐ सत्यं मूर्ध्नि ॐ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः ॐ वरेण्यं विष्णवात्मने शिरसे स्वाहा ॐ भर्गो देवस्य रुद्रात्मने शिखायै वषट् ॐ धीमहि सत्यात्मने कवचाय हुं ॐ धियो यो नो ज्ञानात्मने नेत्रत्रयाय वौषट् ॐ प्रचोदयात्परब्रह्मात्मने अस्त्राय फट् इत्यङ्गमन्त्रानङ्गुष्ठादिक्रमेण कर-योर्विन्यस्य हृदयादिषु न्यसेत् । ध्यानम्-

हृदयकमलमध्ये सूर्यबिम्बासनस्थं
निखिलभुवनबीजं सृष्टिसंहारकेतुम् ।
अनतिशयसुखाढ्यं ज्योतिषं हंसरूपं
सकलनिगमपूर्वं चिन्तयेदोंस्वरूपम् ॥ १ ॥

इति ध्यात्वा मानसैरुपचारैः पूजयित्वा प्राणायामत्रयं कुर्यात् । ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ भूर्भुवः स्वः ॐ

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओमापो ज्योतीरसोऽमृतं ब्रह्मभूर्भुव.स्वरोम् । इति पूर्ववत्सपच्छिरोगायत्र्यर्थं ध्यात्वा प्राणायामं कुर्यात् ।

## अथ गायत्रीमन्त्रार्थः ।

अर्थं विना प्राणायामफलं न स्यात् ' योऽर्थज्ञ इत्सकलं भद्रमश्नुते ' इति वचनात् । तद्यथा—अथ सर्वदेवतात्मनः सर्वशक्तेः सर्वावभासकृतस्तेजोमयस्य परमात्मन सर्वात्मक[ त्व ] द्योतनार्थं सर्वात्म[ त्व ]प्रतिपादकोऽयं गायत्रीमन्त्रः । गायन्तं त्रायसे यस्माद्गायत्री । प्राणानूर्ध्वमुन्नामयत इति प्रणवः । प्राणानामायामो यत्र क्रियते । ततः प्राणायामः । तत्र गायत्रीं प्रणवादिसप्तव्याहृत्युपेतां शिरःसमेतां सर्ववेदसारामित्यथर्वाङ्गिरसम् । एवं विशिष्टां गायत्रीं प्राणायामैरुपास्य ब्रह्मरूपो भवति ।

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।

भूरिति सन्मात्रमन्त्र उच्यते । भुवरिति सर्वं भावयति प्रकाशयतीति व्युत्पत्त्या चिद्रूपमुच्यते । सुवरिति सुष्ठु सर्वेषु प्रीयमाणं सुखरूपं परमानन्दं ब्रह्मपदम् । ( ? ) तप इति सर्वतेजोरूपम् । सत्यमिति सर्वबाधाविरहितमुच्यते । सत्यं ज्ञानमनन्तं ब्रह्मेति भूर्भुवःस्वरोमिति त्रैलोक्यं समस्तव्याहृत्यर्थः । तदिति द्वितीयैकवचनमनेनाखिलजगदुत्पत्तिस्थितिलयकारणहेतुभूतमुपनिषदि कथ्यमानं निरुपमं तत्सद्ब्रह्म तेजोमयं तत्सूर्यमण्डलाभिधेयं ब्रह्माभिधीयते । ' असावादित्यो ब्रह्मेति वचनात् ' । सवितुरिति षष्ठ्यैकवचनं षुञ् प्राणिप्रसव इत्येतस्य धातोरेतद्रूपं सर्वप्राणिमात्रप्रसवितुरित्यर्थः । वरेण्यं प्रार्थनीयं नियमादिभिरपहतकल्मषैः सततं ध्येयमित्यर्थः । भर्गः भञ्जो आमर्दने भृजि भर्जन इत्येतयोर्धात्वो रूपं भजतां पापभर्जनहेतुभूतमित्यर्थः । भ्राजृ दीप्तावित्येतस्य वा भर्गस्तेज इत्यर्थः । देवस्येति षष्ठ्यैकवचनं दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिस्वप्नमदमोदकान्तिगतिष्वित्येतस्य धातोरेतद्रूपं दीव्यतेः क्रीडनत्वाद्विजिगीषुत्वाद्व्यवहारत्वाद्द्युतित्वात्स्तुतित्वात्स्वप्नत्वात्सुमद-

त्वान्मोदकत्वात्सुकान्तित्वाद्गतित्वाज्ज्ञानत्वात्प्राप्यत्वाद्वा देवस्य । धीमहि ध्यै चिन्तायां योऽसावादित्यो हिरण्मयः पुरुषः सोऽसावहमिति चिन्तयामः । धियो द्वितीयाबहुवचनम् । यश्छान्दसत्वाल्लिङ्गव्यत्ययः । यत्तेजः सूर्यमण्डलाभिधयं वरेण्यं श्रेष्ठं भर्गं पापभञ्जनहेतुभूतं तन्नोऽस्माकं धियो बुद्धीः श्रेयस्करेषु कर्मसु प्रचोदयात् । चुद प्रेरणे धातुः प्रेरयेदित्यर्थः । इति भारद्वाजीयधर्मशास्त्रे व्याख्या स्मर्तव्याऽहरहर्द्विजैरिति । आप उदकं ब्रह्मेत्युच्यते । आपो वा इति श्रुतेः । ज्योतिरिति ज्योतिर्मयं रस इति सारा( रसा )त्मकममृतं कैवल्यमात्मतत्त्व तद्ब्रह्मैवाऽऽनन्दपदं तत्किं भूर्भुवःस्वरोमित्येवाक्षररूपं पञ्चवर्णात्मकमयमेव पञ्चाक्षरीमन्त्रः प्रणवादिः प्रणवान्तो वेत्यथर्वाङ्गिरससूत्रम् ।

## अथ संध्याविधिः ।

एवमर्थं स्मरन्ब्रह्माहमस्मीति भावयन्प्राणायामत्रयं कृत्वा ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंध्यामुपासिष्य इति ।

संकल्प्य मार्जनं कुर्यादापो हि ष्ठा कुशो( दकैः )।
पादे पादे क्षिपेन्मूर्ध्नि प्रतिप्रणवसंयुतम् ॥ १ ॥
आत्मानं प्रणवेनैव परिषिच्य जलैः सह ।
कुर्यात्सप्रणवैः पादमार्जनं तु कुशोदकैः ।
यस्य क्षया ेति जलं सकुशं प्रक्षिपेदधः ॥ २ ॥
स्पृष्ट्वा हस्तेन वामेन तटं नद्यादिकेषु च ।
पाणिना दक्षिणेनैव मार्जयेत्सकुशेन तु ॥ ३ ॥
पाणिस्थितोदकेनैव वामहस्तोदकेन वा ।
गृहे तु मार्जनं कुर्यान्नान्यथेत्यब्रवीन्मनुः ॥ ४ ॥

आपो हि ष्ठेति तचस्य सिन्धुद्वीप आपो गायत्री मार्जने विनियोगः । ॐआपो हि ष्ठा० आपो जनयथा च नः । सूर्यश्चेतिमन्त्रस्य याज्ञवल्क्योपनिषदृषिः सूर्यमन्युमन्युपतयो रात्रिश्च देवता प्रकृतिच्छन्दा ममाभ्यन्तरशुद्ध्यर्थे मन्त्राचमने विनियोगः । सूर्यश्च० । दर्भान्विसृज्य कुशपाणिश्च मार्जयेत् । प्रणव-

युक्तसमस्तया व्याहृत्या गायत्र्या आपो हि ष्ठेति नवपादैः शंनो देवीरिति सप्त-भिर्मार्जयेत् ।

नवपादमतिक्रम्य अर्धर्चा वसुसंख्यया ।
ऋतं च प्रणवेनैव मार्जनं समुदाहृतम् ॥
भुवि मूर्ध्नि तथाऽऽकाश आकाशे भुवि मस्तके ।
मस्तके भुवि मूर्ध्नि स्यान्मार्जनज्ञैरुदाहृतम् ॥

इति मार्जनम् ।

ऋतं चैकामृचं वाऽपि द्रुपदां वा जपेदृचम् ।
दृष्टिनासापुटेनैव पापात्मानमपोहयेत् ॥
तज्जलं नावलोक्याथ वामभागे क्षितौ क्षिपेत् ।
आचम्य विसृजेद्दर्भान्पुनरन्यांश्च धारयेत् ॥

भद्रं नो अपि व तय मन इति जलं प्रदक्षिणीकृत्यार्घ्यं दद्यात् ।

पाणिभ्यां जलमादाय गायत्र्या चाभिमन्त्रितम् ।
रवेरभिमुखस्तिष्ठंस्त्रिरूर्ध्वं संध्ययोः क्षिपेत् ॥
द्वौ पादौ तु समौ कृत्वा पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥
प्रादेशस्तु प्रदाशिन्या तालो मध्यमया भवेत् ।
गोश्च शृङ्गमनामिकया वितस्तिस्तु कनिष्ठया ॥

ति गोशृङ्गलक्षणम् ।

जलेष्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थले ।
प्रातर्मध्याह्नयोः काल उत्थायार्घ्यं जले क्षिपेत् ॥
उपविश्य तथा सायं स्थले चार्घ्यं विनिक्षिपेत् ।

तथा चाऽऽपस्तम्बः–

ईषन्नम्रः प्रभातेषु मध्याह्ने ऋजुसंस्थितः ।
उपविश्य तु सायाह्ने जले त्वर्घ्यं न निक्षिपेत् ॥
कालातिक्रमणे यत्तु त्रिसंध्यमपि सर्वदा ।

चतुरर्घ्यं प्रदातव्यं गायत्र्या शिरसा सह ॥
तर्जन्यङ्गुष्ठयोगेन राक्षसी मुद्रिका भवेत् ।
यो ददाति तथा चार्घ्यं तत्तोयं रुधिरं भवेत् ॥
असावादित्यमन्त्रेण सोदकेनैव पाणिना ।
प्रदक्षिणमनुव्रज्य त्वाचामेत्संध्ययोर्द्वयोः ॥
मन्देहानां विनाशाय निक्षिपेत्तु जलाञ्जलीन् ।
प्रायश्चित्तार्थमाचम्य मुच्यते दैत्यहत्यया ॥

## अथार्घ्यदानम् ।

गायत्र्या त्रिरर्घ्यं ·वये दद्यात् । गायत्र्या गाथिनो विश्वामित्र ऋषिः सविता देवता गायत्रीछन्दो रें बीजं णिं शक्तिर्यमिति कीलकमर्घ्यप्रदाने विनियोगः । ॐ भूः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः । ॐभुवः वरेण्यं विष्णवात्मने शिरसे स्वाहा । ॐस्वः भर्गो देवस्य रुद्रात्मने शिखायै वषट् । ॐ भूः धीमहि सत्यात्मने कवचाय हुम् । ॐ भुवः धियो यो नो ज्ञानात्मने नेत्रत्रयाय वौषट् । ॐ स्वः प्रचोदयात् परब्रह्मात्मने अस्त्राय फट् । इत्यङ्गमन्त्रानङ्गुष्ठादिक्रमेण करयोर्विन्यस्य हृदयादिषु न्यसेत् । ॐ भूर्भुवः स्वरोम् परोरजसेऽसावदोमिति दिग्बन्धः । आदित्याभिमुखो भूत्वा–

वेदसारं परं ज्योतिर्मूलभूतं परात्परम् ।
हृदि स्थितं सर्वगतं मण्डलान्तर्गतं शिवम् ॥
चिन्तयेत्परमात्मानमप ऊर्ध्वं विनिक्षिपेत् ।

ॐ घृणिः सूर्य आदित्योमष्टाक्षरं सौरमन्त्रं जपित्वाऽस्त्रोपसंहरणं कुर्यात् । अस्य श्यस्त्रोपसंहरणमन्त्र य ब्रह्मा ऋषिर्दैवी गायत्रीछन्दः श्रीत्रिमूर्तिरूपी परमात्मा देवता अं बीजमुं शक्तिर्मं कीलकमस्त्रोपसंहरणार्थे जपे विनियोगः । ॐ अघोरास्त्राय हृदयाय नमः । ॐ शं शार्ङ्गास्त्राय शिरसे स्वाहा । ॐ ब्रं ब्रह्मास्त्राय शिखायै वषट । ॐ नां नारायणास्त्राय कवचाय हुम् । ॐ पां पाशुपतास्त्राय नेत्रत्रयाय वौषट् ॐ सुं सुदर्शनायास्त्राय फट् । इत्यङ्गमन्त्राङ्गुष्ठादिक्रमेण करयोर्विन्यस्य हृदादिषु न्यसेत् । ॐ शं शरभास्त्रायेति दिग्बन्धः ।

ॐ उत्तिष्ठ देवि गन्तव्यं पुनरागमनाय च ।
भेविष्ट देवि जुष्टत्वं प्रविश्य हृदयं मम ( ? ) ॥

ॐ प्रातर्देवीमित्यृचं पठेत् । ॐ हिरण्यगर्भः समवर्तताग्रे० । सशङ्खचक्रं० ।

सोऽहमर्कमहंज्यो( मर्को महज्यो)तिरर्कज्योतिरहं शिवः ।
आत्मज्योतिरहं शुक्लः सर्वज्योति( ती ) रसोऽस्म्यहम् ।

अ।वायव्यया वायव्या औवीयव्यों हरोऽसि पाप्मानं मे विद्धि ब्रह्मगायत्र्या मम पाप्मानमवधुन्वताम् । ॐ ब्रह्मणे नम एवं प्रत्यर्ची जपेत् । ॐ परोरजसेऽसावदोम् । असावादित्यो ब्रह्म । तत आचम्य तर्पणं कुर्यात् । गायत्र्या श्छन्दऋष्यादि स्मृत्वा गायत्रीतर्पणे विनियोगः । ॐ भूः पुरुषं तर्पयामि । ऋग्वेदं तपयामि । मण्डलं तर्पयामि । हिरण्यगर्भं तर्पयाथि । आत्मानं तर्पयामि । गायत्रीं तर्पयामि । वेदमातरं तर्पयामि । सांकृतिं तर्पयामि । संध्यां तर्पयामि । कौमारीं तर्पयामि । ब्राह्मीं तर्पयामि । उषसं तर्पयामि । निमृजं तर्पयामि । सर्वार्थसिद्धिकरीं तर्पयामि । सर्वमन्त्राधिपतिं तर्पयामि । ॐ भूर्भुवःस्वः पुरुषं तर्पयामि ॥ १६ ॥ द्विराचम्य–

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ १ ॥

ओमित्येकाक्षरं ब्रह्मेति याजुषं त( तु ) जपित्वाऽऽसनपूजादिभूतशुद्धिप्राणप्रतिष्ठामातृकान्यासपूर्वं गायत्रीजपं कुर्यात् । तद्यथा–

कौशेयं वाऽथ चेलं वा चार्मं तौलमथापि वा ।
वेत्रजं तालपत्रं वा कम्बलं द( दा ) र्भमासनम् ॥ १ ॥
वंशाश्मदारुधरणीतृणपल्लवनिर्मितम् ।
वर्जयेदासनं मन्त्री दारिद्र्यव्याधिदुःखदम् ॥ २ ॥
गोशकृन्मृन्मयं भिन्नं तथा पालाशपिप्पलम् ।
लोहविद्धं सदैवाऽऽर्कं वर्जयेदासनं बुधः ॥ ३ ॥

१ अर्ध्येषु देवि गन्तव्यामिति पाठो विश्वामित्रकल्पे ।

दानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥ ४ ॥
आसनारूढपादस्तु जानुनोर्वाऽथ जङ्घयोः ।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते ॥ ५ ॥

पृथिव्या मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छन्द आसने विनियोगः ।

चतुरस्रां धेनुरूपां पीतां कूर्मोपरि स्थिताम् ।
शतकोटियोजनगां पृथ्वीं ध्याये समासने ।
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं चाऽऽसनं कुरु ॥

इत्यासनं स्थापयित्वा ॐभूर्भुवःस्वः कूर्मासनाय नमः । अनन्तासनाय नमः । पद्मासनाय नमः । विमलासनाय नमः । सर्वशक्तिकमलासनाय नमः । आधारशक्तये नमः । दुष्टद्रावणाय नमः । श्रीलक्ष्मीनृसिंहाय नमः । इत्यासनं संपूज्य तत्र पद्मासनेन स्वस्तिकासनेनो( न वो )पविश्य ।

अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिता ।
ये भूता विघ्नकर्तारस्त नश्यन्तु शिवाज्ञया ॥

अनेन वामपादघातत्रयेण भौमान्फट्मन्त्रेण दिव्यांस्तिग्मदृष्ट्याऽन्तरिक्षगान्विघ्नांश्छोटिकाकारास्फासनेनोत्सार्याग्निमुद्रयाऽग्निप्राकारं विधायोर्ध्वकेशोति शिखां बद्ध्वा मूलेन प्रणवेन वा प्राणानायम्य ब्रह्माद्यशेषपारम्पर्यक्रमेण स्वगुरुपादाम्बुजं तावत्प्रणौमीति शिरस्यञ्जलिं कृत्वोच्चार्य गुं गुरुभ्यो नम इति वामस्कन्धे । गं गणपतये नम इति दक्षस्कन्धे । सं सरस्वत्यै नमो नाभौ । दुं दुर्गायै नमो वामकुक्षौ । क्षां क्षेत्रपालाय नमो दक्षिणकुक्षौ । आराध्यदेवतायै गायत्र्यै नमो हृदि । नमो महद्भ्यो नम इत्यृचं पठित्वाऽऽचम्य प्राणानायम्य देशकालौ स्मृत्वा मम चतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गायत्रीमन्त्रजपाधिकार सिद्ध्यर्थं भूतशुद्धिप्राणप्रतिष्ठामातृकान्यासादियोगपीठगायत्रीन्यासान्करिष्य इति संकल्प्य मूलाधारादुत्थितां विद्युत्सहस्रप्रभाभासुरां बिसतन्तुरूपां सुषुम्नामार्गेण

हृदयकमलमागतां कुण्डलिनीं विभाव्य हृदयकमलाज्जविं दीपकलिकाकारं गृहीत्वा द्वादशान्ताम्बुजसहस्रदलगतां विभाव्य तत्र जीवात्मानं ॐ हंस० इति मन्त्रेण परमात्मनि योजयेत् । ततः पादादिजानुपर्यन्तं चतुरस्रं पीतं पृथ्वीमण्डलं तत्र पादगमनक्रियागन्तव्यगन्धघ्राणपृथ्वीब्रह्मानिवृत्तिसमानवायून्संस्मृत्य ॐ ह्रां ब्रह्मणे पृथिव्यधिपतये निवृत्तिकलात्मने हुंफट् स्वाहेति मन्त्रमुच्चार्य तान्कुण्डलिनीद्वाराऽप्सु प्रविलापयामीत्यपां स्थाने संहरेत् । जान्वादिनाभिपर्यन्तं शुक्लमर्धचन्द्राकारं जलमण्डलं तत्र हस्तदानदातव्यरसनाजलविष्णुप्रतिष्ठादानान्स्मृत्वा ॐ ह्रीं विष्णवे जलाधिपतये प्रतिष्ठाकलात्मने हुंफट्स्वाहेति मन्त्रमुच्चार्य तान्सर्वान्कुण्डलिनीद्वाराऽग्नौ प्रविलापयामीत्यग्निस्थाने संहरेत् । नाभ्यादिहृदयपर्यन्तं त्रिकोणवह्निमण्डलं तत्र वायुविसर्गविसर्जनीयरूपचक्षुस्तेजोरुद्रविद्याव्यानान्संस्मृत्य ॐ रुद्राय तेजोधिपतये विद्याकलात्मने हुंफट् स्वाहेति मन्त्रमुच्चार्य तान्सर्वान्कुण्डलिनीद्वारा वायौ प्रविलापयामीति वायुस्थाने संहरेत् । ततो हृदादिभ्रूपर्यन्तं कृष्णं वर्तुलं षड्बिन्दुलाञ्छितं वायुमण्डलं तत्रोपस्थानन्दतद्विषयस्पर्शस्प्रष्टव्यवाय्वीशानशान्त्यपानान्स्मृत्वा ॐ हैं ईश्वराय वाय्वधिपतये शान्तिकलात्मने स्वाहेति मन्त्रमुच्चार्य तान्सर्वान्कुण्डलिनीद्वाराऽऽकाशे प्रविलापयामीत्याकाशे संहरेत् । ततो भ्रूमध्यादिब्रह्मरन्ध्रपर्यन्तं स्वच्छं वर्तुलं हुंफडाकाशमण्डलं तत्र वाग्वदनवक्तव्यशब्दश्रोत्राकाशसदाशिवशान्त्यतीतकालात्मने हुंफट्स्वाहेति मन्त्रमुच्चार्य तान्सर्वानहंकारे प्रविलापयामीत्यहंकारे प्रविलाप्य तमहंकारं महत्तत्त्वे महत्तत्त्वं मातृसंज्ञकशब्दब्रह्मस्वरूपायां हृल्लेखार्थभूतायां प्रकृतौ प्रविलापयामीति तां तथाविधां नित्यशुद्धबुद्धस्वभावस्वप्रकाशे सत्यज्ञानानन्तानन्दलक्षणे परमकारण आदित्यवर्णस्वरूपे परब्रह्मणि प्रविलापयेत् । ततः शरीरस्यान्तर्यामी ऋषिः सत्यो देवता प्रकृतिपुरुषश्छन्दः शरीरस्य पापपुरुषशोषणे विनियोग इत्युक्त्वा–

पुरुषं निष्प्रभं पापमनादिभवसंचितम् ।<br>
ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ॥

सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।<br>
तत्संसर्गपदद्वंद्वमङ्गप्रत्यङ्गपातकम् ॥

उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
अविवेकखड्गधरमहंताचर्मधारिणम् ॥
असत्याश्ववहं कृष्णं पैशुन्यरसभा( भ ) धरम् ।
क्रोधदंष्ट्रासमायुक्तं कामवर्मिणमद्भुतम् ॥
वामकुक्षिस्थितं मूढं क्रूरारम्भनिःस्वनम् ।
अङ्गुष्ठमात्रं व्याधिष्ठं निर्दहेत्तं यथाविधि ॥

इति पापपुरुषं विचिन्त्य यामिति वायुबीजस्य किष्किन्धऋषिर्वायुर्देवता जगतीछन्दः शरीर( गत )पापपुरुषशोषणे विनियोगः । इत्युक्त्वा ।

नाभिमूले च षड्बिन्दुमण्डले यं विचिन्तयेत् ।
तद्वायुबीजं धूम्रं च चञ्चलध्वजसंयुतम् ॥
घूंघूंशब्दयुतं सर्वशोषणं त्वीशदैवतम् ॥

इति ध्यात्वा पूरकयोगेण षोडशवारं वा वायुबीजमावर्त्य तद्बीजोत्थवायुना सशरीरं पापपुरुषं शोषितं विभावयेत् । ततो रमित्यग्निबीजस्य कश्यप ऋषिरग्निर्देवता त्रिष्टुप्छन्दः शरीर ( गत ) पापपुरुषदाहने विनियोग इत्युक्त्वा--

चिन्तयेद्धृदये रक्तं त्रिकोणं वह्निमण्डलम् ।
विद्याकलायुतं रुद्रदैवतं रं समीरितम ॥

इति ध्यात्वा कुम्भकप्रयोगेण चतुःषष्टिवारं पञ्चाशद्वारं वाऽग्निबीजमावर्त्य पापपुरुषभस्म रेचयेत् । ततो वमिति वरुणबीजस्य हिरण्यगर्भ ऋषि वरुणो देवता त्रिष्टुप्छन्दः प्लावने विनियोगः--

वारुणं मण्डलं मूर्ध्नि शुभ्रचन्द्रार्धसंनिभम् ।
सितपङ्कजयुग्माङ्कं वं स्याद्वरुणदैवतम् ॥

इति ध्यात्वा तद्बीजस्रुतामृतेन तच्छरीरभस्म पिण्डीभूतं विभावयेत् । ततो लमिति पृथ्वीबिजस्य ब्रह्मा ऋषिरिन्द्रो देवता गायत्री छन्दः कठिनीकरणे विनियोगः--

आधारमण्डले पृथ्वीमण्डलं वज्रलाञ्छितम् ।

चतुष्कोणं च कठिनं पीतवर्णेन्द्रदैवतम् ॥
लंबीजेन समायुक्तं ध्यायेन्मनसि पूर्ववत् ।

इति ध्यात्वा तद्बीजोत्थेन काठिन्येन तनुं दृढां भावयेत् । ततो हमित्याकाशबीजस्य ब्रह्मा ऋषिराकाशो देवता पङ्क्तिश्छन्दो व्यूहने विनियोग इत्युक्त्वा—

आकाशमण्डलं वृत्तं द्वादशान्ते हमुज्ज्वलम् ।
शान्त्यतीताकलायुक्तं चिन्त्यमाकाशदैवतम् ॥

इति ध्यात्वा तदुत्थेनाऽऽकेशे( काशे ) नावकाशं भावयेत् । एवं स्वशरीरं विचिन्त्य परमात्मनः सकाशात्सृष्टिक्रमेण तत्त्वादि स्वस्वस्थानं प्रापयेत्। ततः परमात्मनः सकाशाज्जीवम् ॐ सोऽहमिति मन्त्रेण हृदयकमलमानयेत्। ततः स्वशरीरं पापरहितं नवं निर्मलं सावित्रीदेवताराधनयोग्यं विभावयेदिति संक्षेपतो भूतशुद्धिः ।

भूतशुद्धिविहीनेन जपपूजादिकं कृतम् ।
सर्वं निरर्थकं विद्धि विपरीतफलार्थदम् ॥

इति वसिष्ठसंहितावचनादावश्यकी भूतशुद्धिः ।

## अथ स्वदेहे प्राणप्रतिष्ठा ।

तद्यथा–

हृदि हस्तं निधायाथ प्राणस्थापनमाचरेत् ।
ततो जन्मादिकद्व्यष्टक्रियासंस्कारसिद्धये ॥
षोडश प्रणवावृत्तीः कृत्वा शक्तिं परां स्मरेत् ।
बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ॥
पाशाङ्कुशधरां चापं सावित्रीं दधतीं भजे ।

ॐअस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषय ऋग्यजुःसामानि छन्दांसि चिद्रूपिणी प्राणशक्तिर्देवता आं बीजं ह्रीं शक्तिः क्रों कीलकं प्राणप्रतिष्ठायां विनियोग इति शिरोमुखहृदयगुह्यपादसर्वाङ्गेषु क्रमेण विन्यस्य करषडङ्गन्यासं कुर्यात् । तद्यथा–ॐआं ह्रीं क्रों अं कं खं गं घं ङंआं पृथिव्यप्ते-

जोवाय्वाकाशात्मने हृदयाय नमः । ॐइंचंछंजंझंञंईं शब्दस्पर्शरूपरसगन्धात्मने शिरसे स्वाहा। ॐ उंटंठंडंढंणंऊं श्रोत्रत्वक्चक्षूरसनाघ्राणात्मने शिखायै वषट्। ॐ एंतंथंदंधंनंऐं वाक्पाणिपादपायूपस्थात्मने कवचाय हुम्। ॐओंपंफंबंभंमंऔं वचनादानगतिविसर्गानन्दात्मने नेत्रत्रयाय वौषट् । ॐअंयंरंलंवंशंषंसंहंळंक्षंअः मनोबुद्ध्यहंकारचित्तप्राणात्मने अस्त्रायफट्। इत्यङ्गमन्त्रानङ्गुष्ठादिक्रमेण करयोर्विन्यस्य हृदयादिषु न्यसेत् । ॐ आं नमो नाभेश्चरणपर्यन्तम् । ॐ ह्रीं नमो हृदादिनाभिपर्यन्तम्। ॐ क्रों नमो मूर्धादिहृदयपर्यन्तम्। ॐयं त्वगात्मने नमः। ॐरम् असृगात्मने नमः ॐलं मांसात्मने नमः । ॐ वं मेदात्मने नमः। ॐशम् अस्थ्यात्मने नमः। ॐ षं मज्जात्मने नमः । ॐसं शुक्रात्मने नमः। ॐहं जीवात्मने नमः । ॐ ळम् अस्थ्यात्मने नमः । ॐक्षं क्रोधात्मने नमः। इति हृदये न्यसेत्। ततो हृदि हस्तं दत्त्वा जपेत्। ॐआंह्रींक्रोंवंरंलंवंशंषंहंळंक्षंहंसः सोहं स्वाहा मम प्राण इह प्राणाः । ॐआमित्यादि मम जीव इह स्थितः । ॐआं० मम सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रघ्राणजिह्वापाणिपादपायूपस्थत्वक्प्राणा इहाऽऽगत्य सुखं चिरं तिष्ठन्तु स्वाहा । हृदि हस्तं दत्त्वा जन्मादिषोडशसंस्कारसिद्धये षोडशवारं प्रणवजपं कृत्वा ध्यायेत्।

> रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
> पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्च बाणान्।
> बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
> देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः॥

इति ध्यात्वा मानसोपचारैः पूजयित्वा तत्स्वरूपो भूत्वा मातृकान्यासं कुर्यात्। तदङ्गप्राणायामः—

> इडया पूरयेद्वायुं स्वरैः स्पर्शैश्च कुम्भयेत्।
> रेचयेद्यादिभिर्वर्णैः प्राणायामः समातृकः॥

अस्य श्र्यन्तर्मातृकाबहिर्मातृकामन्त्रस्य प्रजापतिर्ऋषिर्गायत्री छन्दो मातृकासरस्वती देवता हलो बीजानि स्वराः शक्तयो बिन्दवः कीलकं श्रीगायत्रीजपाङ्गत्वेन न्यासे विनियोगः । इति ऋष्यादिकं विन्यस्य करषडङ्गन्यासं

कुर्यात् । ॐअंकंखंगंघंङंआं हृदयाय नमः । ॐइंचंछंजंझंञंईं शिरसे स्वाहा ॐउंटंठंडंढंणंऊं शिखायै वषट् । ॐएंतंथंदंधंनंऐं कवचाय हुम् । ॐओंपंफंबंभंमंऔं नेत्रत्रयाय वौषट् । ॐअंयंरंलंवंशंषंसंहंळंक्षंअः अस्त्राय फट् । आदौ करन्यासं विधाय हृदयादिन्यासं च कृत्वाऽन्तर्मातृकान्यासं कुर्यात् । ततोऽकारादिषोडशबीजानि कण्ठस्थाने षोडशदले विशुद्धचक्रे प्रादक्षिण्येन न्यसेत् । ॐअं नमः । ॐआं नमः इत्यादि । [ कादि ] द्वादशबीजानि हृदयेऽनाहतचक्रे द्वादशदले डकारादीनि दशबीजानि नाभिस्थाने मणिपूरे दशदले बकारादीनि षड्बीजानि लिङ्गस्थाने षड्दले वकारादीनि चत्वारि बीजानि गुह्यस्थाने आधारे चतुर्दले हं क्षं भ्रूमध्य आज्ञाचक्रे द्विदल इति विन्यस्य ध्यायेत् ।

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदलदशदले द्वादशार्धे चतुष्के ।
वासान्ते बालमध्ये डफकठ हिते आदियुक्ते स्वराणां
हं क्षं तत्त्वार्थयुक्तं सकलतनुगतं वर्णरूपं नमामि ॥

ततो बहिर्मातृकान्यासः प्राग्वत् । ॐ अं नमः शिरसि । आं नमो मुखे । वृत्ते इं नमो दक्षनेत्रे । ईं नमो वामनेत्रे । उं नमो दक्षकर्णे । ऊं नमो वामकर्णे । ऋं नमो दक्षनासापुटे । ॠं नमो वामनासापुटे ऌं नमो दक्षकपोले । ॡं नमो वामकपोले । एं नम ऊर्ध्वोष्ठे । ऐं नमोऽधरे । ओं नम ऊर्ध्वदन्तपङ्क्तिषु । औं नमोऽधोदन्तपङ्क्तिषु । अं नमः शिरसि । अः नमो मुखान्ते । कं नमो दक्षबाहुमूले । खं नमः कूर्परे । गं नमो मणिबन्धे । घं नमोऽङ्गुलीमूले । ङं नमोऽङ्गुल्यग्रे । चं नमो वामबाहुमूले । छं नमः कूर्परे । जं नमो मणिबन्धे । झं नमोऽङ्गुलीमूले । ञं नमोऽङ्गुल्यग्रे । टं नमो दक्षपादमूले । ठं नमो जानुनि । डं नमो गुल्फे । ढं नमोऽङ्गुलीमूले । णं नमोऽङ्गुल्यग्रे । तं नमो वामपादमूले । थं नमो जानुनि । दं नमो गुल्फे । धं नमोऽङ्गुलीमूले । नं नमोऽङ्गुल्यग्रे । पं नमो दक्षपार्श्वे । फं नमो वामपार्श्वे । बं नमः पृष्ठे । भं नमो नाभौ । मं नमो उदरे । यं नमो हृदि । रं नमो दक्षांसे । लं नमः ककुदि । वं नमो वामांसे ।

शं नमो दक्षकक्षायाम् । षं नमो वामकक्षायाम् । सं नमो हृदयादिकरद्वये । हं नमो हृदयादिपादद्वये । ळं नमो हृदयादिमुखे । क्षं नमः सर्वाङ्गे, इति विन्यस्य मातृकासरस्वतीं ध्यायेत् ।

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षो
देशां भास्वत्कपर्दां कलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ १ ॥

इति ध्यात्वा मानसैरुपचारैः पूजयित्वाऽकारादिक्षकारान्तां मातृकामनुलोमविलोमतो जपित्वा व्यापकत्वेन तत्तद्वर्णांस्तत्तत्स्थानेषु ध्यात्वा गायत्रीमन्त्रन्यासं कुर्यात् ।

ऋषिच्छन्दोदैवतानि स्मृत्वा न्यासान्समाचरेत्

इति वसिष्ठसंहितावचनात् । तद्यथा——प्राणायामत्रयं कृत्वा ॐ अस्य श्रीगायत्रीमन्त्रस्य विश्वामित्र ऋषिर्गायत्री छन्दः श्रीसवितृरूपिणी सावित्री देवता ॐ भूः रें बीजम् ॐ भुवः णिं शक्तिः ॐ स्वः यं कीलकं मम चतुर्विधपुरुषार्थसिद्ध्यर्थं गायत्रीमन्त्रजपे विनियोगः । ऋष्यादि यथास्थाने विन्यस्य करसंपुटेन गायत्र्या करयोर्व्यापकं कुर्यात् । ॐतत्सवितुर्ब्रह्मात्मने अङ्गुष्ठयोर्न्यसामि । ॐ वरेण्यं विष्णवात्मने तर्जन्योर्न्यसामि । ॐ भर्गो देवस्य रुद्रात्मने मध्यमयोर्न्यसामि । ॐ धीमहि सत्यात्मने अनामिकयोर्न्यसामि । ॐ धियो यो नो ज्ञानात्मने कनिष्ठिकयोर्न्यसामि । ॐ प्रचोदयात् परब्रह्मात्मने करतलकरपृष्ठयोर्न्यसामि । एवं हृदयादिषु न्यासः । ॐ भुर्भुवःस्वरोमिति दिग्बन्धः ।

## अथ व्याहृतिन्यासः ।

भूः पादयोर्न्यसामि । भुवः जान्वोर्न्यसामि । स्वः कट्योर्न्यसामि । महो नाभौ न्यसामि । जनो हृदये न्यसामि । तपः कण्ठे न्यसामि । सत्यं ललाटे न्यसामि ।

## अथ पदन्यासः ।

तत्पादयोः । सवितुर्जङ्घयोः । वरेण्यं कट्योः । भर्गो नाभौ । देवस्य हृदि । धीमहि कण्ठे । धियो मुखे । यो भ्रूमध्ये । नो ललाटे । प्रचोदयान्मूर्ध्नि । इति पदन्यासः ।

## अथाक्षरन्यासः ।

ॐ तत्पादयोः । स गुल्फयोः । वि जङ्घयोः । तु जान्वोः । र्वं ऊर्वोः । रे गुह्ये । णि लिङ्गे । यं कट्योः । भ नाभौ । र्गो उदरे । दे स्तनयोः । वं हृदि । स्य कण्ठे । धी वक्त्रे । म तालौ । हि नासिकायाम् । धि नेत्रयोः । यो भ्रूमध्ये । यो ललाटे । नः पूर्वमुखे । प्र दक्षिणमुखे । चो पश्चिममुखे । द उत्तरमुखे । या मूर्ध्नि । तकारव्यञ्जनं सर्वाङ्गेषु । गायत्र्याश्चतुर्विंशत्यक्षरेषु पृथिव्यादितत्त्वदृष्टिस्तत्र प्रथमपादे लोकत्रयदृष्टिः ( ? ) । तृतीयपादे ब्रह्मदृष्टिः । प्रणवादिप्रणवान्तगायत्रीमन्त्रं चतुर्थचरणसहितं त्रिवारं व्यापकत्वेन न्यसेत् । तद्यथा—ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । परो रजसेऽसावदोमिति केशादिपादपर्यन्तं पादादिकेशपर्यन्तं त्रिवारं न्यसेत् ।

## अथ स्वदेहे योगपीठन्यासः ।

अंसद्वयोरुद्वयोपकल्पितपादचतुष्टयं मुखनाभिपार्श्वद्वयमध्योपकल्पित गात्रकं पीठरूपं निजदेहं ध्यात्वा तत्र न्यसेत् । ॐ मूलाधारे महाकालाय रक्तवर्णाय मण्डूकाधाराय नमः । तदुपरि स्वाधिष्ठानपर्यन्तं पञ्चवक्त्राय दशभुजाय रक्तवर्णवामदक्षिणपार्श्वाय कालाग्निरुद्राय नमः । तदुपरि नाभिपर्यन्तं बन्धूकरुचिरायै मूलप्रकृत्यै नमः । तदुपरि हृदयपर्यन्तं शरच्चन्द्रप्रभायै पङ्कजद्वयधारिण्यै आधारशक्त्यै नमः । तदुपरि हृदयपर्यन्तं कूर्माय नमः । अनन्ताय नमः । वराहाय नमः । पृथिव्यै नमः । अमृतवर्णाय नमः । रत्नद्वीपाय नमः । स्वर्णपर्वताय नमः । कल्पवृक्षोद्यानाय नमः । मणिमयमहाभूमिकायै नमः । मणिमण्डपाय नमः । कल्पवृक्षाय नमः । रत्नवेदिकायै नमः । रत्नसिंहासनस्य नमः । ततः सिंहासनस्य पादगात्ररूपत्वेन दक्षांसे

रक्तवर्णाय वृषभरूपाय धर्माय नमः । वामांसे श्यामवर्णाय सिंहरूपाय ज्ञानाय नमः । वामोरौ हरिद्वर्णाय भूतरूपाय वैराग्याय नमः । दक्षिणोराविन्द्रनीलवर्णाय गजरूपायैश्वर्याय नमः । एतत्पादरूपिणस्ततो मध्ये गात्रत्वेन हृदि योगपीठस्य मुखे शूद्ररूपाय कृष्णवर्णाय खड्गचर्मधरायाधर्माय नमः । वामपार्श्वे ईश्वररूपायान्धकारवर्णाय ज्ञानाय नमः । नाभावुन्मत्तपिशाचरूपायवैराग्याय नमः । दक्षिणपार्श्वे स्त्रीशूद्ररूपाय मुक्तकेशाय नग्नायानैश्वर्याय नमः । ततो मध्ये हृत्कमले शेषाय नम । पद्माय नमः । तत्राऽऽनन्दकन्दाय नमः । संविन्नालाय नमः । सर्वतत्त्वात्मकपद्माय नमः । प्रकृतिमयपत्रेभ्यो नमः । पञ्चाशद्वर्णबीजाढ्यकर्णिकायै नमः । तस्यां अं अर्कमण्डलाय नमः । उं सोममण्डलाय नमः । मं वह्निमण्डलाय नमः । सं सत्त्वाय नमः । रं रजसे नमः । तं तमसे नमः । आं आत्मने नमः । अं अन्तरात्मने नमः । पं परमात्मने नमः । ज्ञां ज्ञानात्मने नम इति विन्यस्य हृदयदेशे गायत्रीयन्त्रं विभावयेत् । तद्यथा—

शक्तेर्बाह्यकृशानुकोणविलसद्भूरादिसत्कार्णिकं
वस्वस्रं स्वरयुग्मकेसरदलं वर्गैस्त्रिवर्णं मनोः ।
चूडायन्त्रतुरीयवेष्टितमिदं क्ष्माकोणताराङ्कितं
गायत्र्याः कथितं महःप्रभृतिभिर्यन्त्रं तु दीक्षाङ्कितम् ॥ १ ॥

अस्यार्थः—शक्तेस्त्रिकोणाद्बहिः कृशानुकोणेषु त्रिकोणेषु विलसन्तो भूरादयो भूर्भुवः स्वर्व्याहृतिर्बीजत्रयं भावयन्त इत्यर्थः । वस्वस्रेष्वष्टकोणेषु प्रतिदले स्वरयुग्मसंपुटितं मनोर्गायत्रीमन्त्रस्य त्रिवर्णं तदादिलिखितं दीप्तमन्त्रं भावयित्वा चूडामन्त्रस्तेन तुरीयं चतुर्थः पाद 'परोरजसे' इति अनेन च वेष्टितं क्ष्माकोणे भूपुरेषु चतुष्कोणेषु तारादिमहत्प्रभृतिभिरङ्कितं ककारादिवर्णैः क्षान्तैर्बहिर्वेष्टितं भावयित्वा मध्ये त्रिकोणस्य सूर्यमण्डलाकारं तेजोरूपां वर्तुलाकारां कोटिमार्तण्डतेजोमयं चिन्तयित्वा तत्र वक्ष्यमाणध्यानरूपां श्रीसावित्रीं ध्यायेत् । तद्यथा—

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै—
युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयाङ्कुशकशां शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगुलं हस्तैर्वहन्तीं भजे ॥ १ ॥

## अथ मालाध्यानम्–

हृदयकमले योगपीठे सुधासागरान्तराले मणिमयद्वीपे स्वर्णमयपर्वते स्वर्णप्राकारवेष्टिते नन्दनोद्याने चिन्तामणिमण्डपे रत्नसिंहासने चक्रराजबिम्बे कोटिसूर्यतेजोमये बालार्कायुतप्रभां त्रिनेत्रां पञ्चवक्त्रां दशभुजां वरदाभयाङ्कुशप्रतोदपानपात्रजपमालाशङ्खचक्राम्बुजयुग्मधरां दिव्यगन्धानुलेपनीं दिव्यालंकारभूषितां कोटिकन्दर्पलावण्यविलासवतीं प्रहसितमुखारविन्दां सर्वावरणदेवताऋषिपितृगणपरिवृतां द्विजवत्सलां सर्वाभीष्टदां सर्वपापहन्त्रीं श्रीसावित्रीं चिन्तयामि ।

चिन्तयन्नेवमात्मानं जपं कुर्यात्समाहितः ।
मानसे पूजयित्वा तां विशुद्धः साधकोत्तमः ॥ १ ॥

एवं स्वैक्येन ध्यात्वा मानसोपचारैर्यथोक्तप्रकारेण गुरूपदिष्टेन पूजयित्वा प्रसन्नां हृदि ध्यायन्यथाशक्ति मूलविद्यां सावित्रीं मनसा जपित्वा तज्जपं देव्या हस्ते निवेद्याऽऽत्मपूजापुरःसरं मानसयागं कुर्यात् । तदुक्तं विश्वामित्रसंहितायाम्–

प्राणायामत्रयं कृत्वा प्रविश्य हृदयाम्बुजम् ।
देवतां तत्र संचिन्त्य मनसाऽऽराधयेत्ततः ॥ १ ॥
येन क्रमेण यैर्मन्त्रैर्द्रव्यैर्नानाविधैः शुभैः ।
तेन क्रमेण तैरेव मानसो याग ईरित. ॥ २ ॥
न वाऽप्युच्चारयेन्मन्त्रं मनसैव मनुं स्मरेत् ।
मुद्रां न दर्शयेत्तत्र हस्ताभ्यां भावयेत्ततः ॥ ३ ॥
अत्र चाऽऽवाहनं नोक्तं हृदये मानसार्चने ।
आराध्य मनसा भक्त्या गायत्रीजपमाचरेत् ॥ ४ ॥

हृदयाम्बुजं प्रविश्येति संबन्धः । हृदयाम्बुजमित्यत्र बाह्यवत्स्वासने योग

पीठत्वेन मनसैव पूजयित्वा तेनार्घ्यस्थापनादिकर्मकलाय ( पं )नं ( ? ) मानसमेव हृदयस्थेन कार्यमित्यर्थः । तथा वसिष्ठसंहितायाम्—

ध्यात्वाऽन्तर्यजेत्पीठन्यासमार्गेण मन्त्रवित् ।
तस्मिन्पीठे स्थितां देवीं गायत्रीं मुक्तविग्रहाम् ॥
ध्यात्वा यजेच्चन्दनाद्यैर्मानसैर्भोजनान्तिकैः ।
भोजनावसरे मन्त्री वैश्वदेवं समाचरेत् ॥
मूलाधारगते कुण्डे देवताग्निसमुज्ज्वले ।
धर्माधर्मैर्धिते व्यस्रे मूलमन्त्रपुरःसरम् ॥
अमुं जुहोमि स्वाहेति प्रत्येकं जुहुयात्सुधीः ।
हिंसां नास्तिक्यमज्ञानमदयां दम्भकैतवे ॥
व्रात्यत्वमनृजुत्वं च दारिद्र्यं शोकमत्सरौ ।
अहंतासत्यपैशुन्यकामक्रोधमदान्रुजम् ।
अक्षमां चामिताहारं भयं निद्रां सुखेतरम् ।
अधैर्यं दुष्टसंतापं नीचसङ्गं त्वविद्यताम् ॥
आसुरं भावमित्यष्टाविंशत्याहुतिभिर्हुवेत् ।
मन एव स्रुवः प्रोक्तः सुषुम्ना स्रुगुदीरिता ॥
अन्तर्निरन्तरनिरिन्धनमेधमाने
मोहान्धकारपरिपन्थिनि संविदग्नौ ।
कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ
विश्वं जुहोमि वसुधादिशि वा वसानम् ॥

इत्यनेनैकाहुतिं पूर्णां दद्यात् ।

तदन्ते तन्मयो भूत्वा जपेदिच्छानुरूपतः ।
तज्जपं सर्वदुःखघ्न्यै सावित्र्यै च समर्पयेत् ॥
ततस्तु देवतारूपो भूत्वा तिष्ठेत्कियत्क्षणम् ।
इत्येवमान्तरं यागं कृत्वाऽऽत्मानं प्रपूजयेत् ॥

अथाऽऽत्मपूजा ।

तत्र सजलेन पवित्रेण गायत्रीमुच्चार्य मूलाधारे हृदये भ्रूमध्ये च संप्रोक्ष्य मूलादिब्रह्मरन्ध्रान्तं दशप्रणवसंयुक्तां चतुष्पदां गायत्रीमुच्चार्याखण्डदण्डायमानतेजोरूपां विभाव्य तत्तेजोभिरेकीभूतमानन्दघनं गुरुमन्त्रदेवतानामभेदेन सावयवीकृतं स्वशरीरं निर्मलं मत्वा गन्धपुष्पधूपदीपैरम्बुदैर्भैर्वाऽऽत्मानं पूजयित्वाऽलंकारैर्भूषयित्वा योगपीठं विचिन्त्य तत्तन्मन्त्रैस्तत्तत्स्थानं संप्रोक्ष्योत्तमाङ्गे हृदये मूलाधारे पदद्वये चेति पञ्चसु स्थानेषु पञ्चकृत्वः पुष्पाञ्जलिं दत्त्वा सवितृरूपमात्मानं ध्यात्वा वर्णाक्षमालया रुद्राक्षमालया वाऽष्टोत्तरशतमष्टाविंशतिवारं वा जपित्वा पुनः प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गं कृत्वा ध्यात्वा ( च ) देव्या हस्ते जपं तेजोमयं निवेदयेत् ।

ॐ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात्करे स्थिता ॥

त्यनेन मन्त्रेण जपं निवेद्य चतुर्विंशतिमुद्राः प्रदर्शयेत् ।

## अथ द्राविधिः ।

मुदं ददाति देवानां द्रावयत्यसुरांस्तथा ।
मोदनाद्द्रावणाच्चैव मुद्रेति परिकीर्तिता ॥

इति वचनान्मुद्राप्रदर्शनमावश्यकम् ।

अथातो दर्शयेन्मुद्राः सुमुखं संपुटं तथा ॥
ततो विततविस्तीर्णे द्विमुखत्रिमुखे ततः ।
चतुर्मुखं पञ्चमुखं षण्मुखाधोमुखे ततः ॥
व्यापकाञ्जलिकं चैव शकटं तदनन्तरम् ।
यमपाशं तु ग्रथितं ततः स्यात्संमुखोन्मुखम् ॥
विलम्बो मुष्टिको मीनस्ततः कूर्मवराहकौ ।
सिंहाक्रान्तं महाक्रान्तं ततो मुद्गरपल्लवौ ॥
एता मुद्राश्चतुर्विंक्षद्रा( ! )यत्र्याः सुप्रतिष्ठिताः ।

एतल्लक्षणमाह–

सुमुखं संहतौ हस्तावुत्तानौ कुञ्चिताङ्गुली ।
संपुटं पद्मकोशाभौ करावन्योन्यसंहतौ ॥

विततं संयतौ हस्तावुत्तानावायताङ्गुली ।
विस्तीर्णं संहतौ पाणी मिथो मुक्ताङ्गुली () द्वयोः ॥
संमुखं सक्तयोः पाण्योः कनिष्ठाद्वययोगतः ।
शेषाङ्गुलीनां वैकल्ये द्विमुखत्रिमुखादयः ॥
शेषाङ्गुलीनां संयोगात्पूर्वसंयोगनाशनम् ।
तिर्यक्संयुज्यमानाग्रौ संयुक्ताङ्गुलिमण्डला ॥
हस्तौ षण्मुखमित्युक्ता मुद्रा मुद्राविशारदैः ।
आकुञ्चिताग्रौ संयुक्तौ न्युब्जौ हस्तावधामुखैः ॥
उत्तानौ तादृशावेव व्यापकं कुञ्चितौ करौ ।
अधोमुखौ बद्धमुष्टी मुक्ताग्राङ्गुष्ठकौ करौ ॥
शकटं नाम कथितं यमपाशमतः परम् ।
बुद्धमुष्टिकयोः पाण्योरुत्ताना वामतर्जनी ॥
कुञ्चिताग्राऽन्यया युक्ता तर्जन्याऽनृजुवक्त्रया ।
उत्तानसंधिसंलीनवृद्धाङ्गुलिद्वयौ करौ ॥
संमुखावघटितौ दीर्घाङ्गुष्ठौ ग्रथितमुच्यते ।
ऊर्ध्वाङ्गुलिर्वामहस्तस्तादृशा दक्षिणेन तु ॥
अधीमुखेन संयुक्तः संमुखोन्मुख उच्यते ।
उत्तानोत्तानकोटौ च प्रलम्बः कथितः करौ ॥
मुष्टी चान्योन्यसंयुक्तावुत्तानौ मुष्टिको भवेत् ।
मीनस्तु संमुखीभूतौ मुक्तानामकनिष्ठिकौ ॥
ऊर्ध्वसंयुक्तवक्त्रौ तु शेषाङ्गुलिदलौ करौ ।
अधोमुखः करो वामस्तादृशा दक्षिणेन तु ॥
पृष्ठदेशे समाक्रान्तः कूर्मो नाम्नाऽभिधीयते ।
ऊर्ध्वमध्यं वामभुजः कक्षायामाश्रयेत्करम् ॥
वराही नाम मुद्रेयं कथिता मुनिसत्तमैः ।

---

() लीयकौ । इति ब्रह्मकल्पे ।

कण्ठाश्रितौ करौ कर्णसंश्रितावायताङ्गुली ।
सिंहाक्रान्तं नाम मुद्रा महाक्रान्तं च कथ्यते ।
किंचिदाकुञ्चिताग्रौ च हस्तौ कृत्वा तथा भवत् ॥
ऊर्ध्वं किंचिद्गतौ पाणी मुद्गरो वामतर्जनी ।
ग्रस्ता दक्षिणहस्तेन मुद्रा प्रोक्ता मनीषिभिः ॥
अधोमुखः स्थितो मूर्ध्नि पल्लवो दक्षिणः करः ।
मुद्राणां लक्षणं प्रोक्तं वसिष्ठाद्यैर्मुनीश्वरैः ॥

अत्र महासंहितोक्तौ( क्तो ) विशेषः–

न जातु दर्शयेन्मुद्रा महाजनसमागमे ।
क्षुभ्यन्ति देवतास्तस्य विफलं वै भवेदिति ॥
एता मुद्रा न जानाति तस्य देवी न सिध्यति ।
शपन्ति देवता. सर्वा गायत्र्यक्षरसंस्थिताः ॥

एवं दर्शयित्वा विश्वामित्रसंहितोक्तं गायत्रीकवचं जपेत् । अस्य श्रीगायत्रीकवचस्य ब्रह्मा ऋषिर्गायत्री छन्दो गायत्री देवता ॐ भूः रें बीजम् । भुवः णिं शक्तिः । स्वः यं कीलकम् । गायत्रीप्रसादासिद्ध्यर्थे जपे विनियोगः । अथ ध्यानम्–

पञ्चवक्त्रां दशभुजां सूर्यकोटिसमप्रभाम् ।
सावित्रीं ब्रह्मवरदां चन्द्रकोटिसुशीतलाम् ॥
त्रिनेत्रां सितवक्त्रां च मुक्ताहारविराजिताम् ।
वराभयाङ्कुशकशापानपात्राक्षमालिकाः ॥
शङ्खं चक्राब्जयुगुलं कराभ्यां दधतीं पराम् ।
सितपङ्कजसंस्थां च हंसारूढा सुखस्मिताम् ॥
ध्यात्वैवं मानसाम्भोजे गायत्रीकवचं जपेत् ॥

ॐ ब्रह्मोवाच–

विश्वामित्र महाप्राज्ञ गायत्रीकवचं शृणु ।
यस्य विज्ञानमात्रेण त्रैलोक्यं वशयेत्क्षणात् ॥ १ ॥

सावित्री मे शिरः पातु शिखायाममृतेश्वरी ।
ललाटं ब्रह्मदैवत्या भ्रुवौ मे पातु वैष्णवी ॥ २ ॥
कर्णौ मे पातु रुद्राणी सूर्या सावित्रिकाऽम्बके ।
गायत्री वदनं पातु शारदा दशनच्छदे ॥ ३ ॥
द्विजान्यज्ञप्रिया पातु रसनायां सरस्वती ।
सांख्यायनी नासिकां मे कपा( पो )ला चन्द्रहासिनी ॥ ४ ॥
चिबुकं वेदगर्भा च कण्ठं पात्वघनाशिनी ।
स्तनौ मे पातु इन्द्राणी हृदयं ब्रह्मवादिनी ॥ ५ ॥
उदरं विश्वभोक्त्री च नाभौ पातु सुरप्रिया ।
जघनं नारसिंही च पृष्ठं ब्रह्माण्डधारिणी ॥ ६ ॥
पार्श्वौ मे पातु पद्माक्षी गुह्यं गोगोप्त्रिकाऽवतु ।
ऊर्वोरोंकाररूपा च जान्वोः संध्यात्मिकाऽवतु ॥ ७ ॥
जङ्घयो पातु अक्षोभ्या गुल्फयोर्ब्रह्मशीर्षका ।
सूर्या पदद्वयं पातु चन्द्रा पादाङ्गुलीषु च ॥ ८ ॥
सर्वाङ्गं वेदजननी पातु मे सर्वदाऽनघा ॥ ९ ॥
इत्येतत्कवचं ब्रह्मन्गायत्र्याः सर्वपावनम् ।
पुण्यं पवित्रं पापघ्नं सर्वरोगनिवारणम् ॥ १० ॥
त्रिसंध्यं यः पठेद्विद्वान्सर्वान्कामानवाप्नुयात् ।
सर्वशास्त्रार्थतत्त्वज्ञः स भवेद्वेदवित्तमः ॥ ११ ॥
सर्वयज्ञफलं प्राप्य ब्रह्मान्ते समवाप्नुयात् ।
प्राप्नोति जपमात्रेण पुरुषार्थांश्चतुर्विधान् ॥ १२ ॥

इति श्रीविश्वामित्रसंहितायां ब्रह्मकौशिकसंवादे गायत्रीकवचं संपूर्णम् ॥

---

एवं कवचं जपित्वा गायत्रीचतुर्थपादमन्त्रं जपेत् ।

अस्य श्रीगायत्रीचतुर्थपादस्य विमल ऋषिः परब्रह्मपरमात्मा देवता गायत्री छन्दः श्रीगायत्रीचतुर्थपादजपे विनियोगः । ॐपरो हृदये । रजसे शिरासि ।

असावदों शिखायाम् । परोरजसे कवचे । असावदों नेत्रयोः । परोरजसेऽसावदों अस्त्रे । इति करषडङ्गन्यासं कृत्वा ॐ भूर्भुवः स्वरों परोरजसेऽसावदों सर्वाङ्गे । अथ ध्यानम्—

दशहस्तां पञ्चवक्त्रां कोटिसूर्यसमप्रभाम् ।
पद्महस्तां वेदगर्भां ब्रह्मरूपां हृदि स्मरेत् ॥

इति ध्यात्वा मानसोपचारैः पूजयित्वाऽष्टवारं चतुर्थपादजपं कृत्वा गायत्रीतर्पणं कुर्यात् । तत्राऽऽदौ विसर्जनमुद्राः प्रदर्शयेत् ।

## अथ विसर्जनमुद्राः ।

सुरभिर्ज्ञानं शूर्पं च योनिः कूर्मोऽथ पङ्कजम् ।
लिङ्गं निर्याणमुद्रा च जपान्तेऽष्टावुदाहृताः ॥

इति दर्शयित्वा वसिष्ठशापविमोचनं कुर्यात् । अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य विश्वामित्र ऋषिः सूर्यो देवता गायत्री छन्दो वसिष्ठशापमोचनार्थे जपे विनियोगः ।

ॐ अहो देवि महादेवि संध्ये विद्ये सरस्वति ।
अजरे अमरे चैव ब्रह्मयोने नमोऽस्तु ते ॥ १ ॥

वसिष्ठशापाद्विमुक्ता भव । तत आचम्य गायत्रीतर्पणं कुर्यात् ।

## अथ गायत्रीतर्पणम् ।

ॐ भूर्भुवःस्वः पुरुषमृग्यजुःसाममण्डलान्तर्गतं सवितारमावाहयामीत्यावाह्य तर्पणं कुर्यात् । ॐ भूःपुरुषमृग्वेदं तर्पयामि । ॐ भुवःपुरुषं यजुर्वेदं तर्पयामि । ॐ स्वःपुरुषं सामवेदं तर्पयामि । ॐ महःपुरुषमथर्ववेदं तर्पयामि । ॐ जनःपुरुषमितिहासपुराणं तर्पयामि । ॐ तपःपुरुषं सर्वागमं तर्पयामि । ॐ सत्यंपुरुषं सर्वलोकं तर्पयामि । ॐ भूर्भुवःस्वः [ पुरुषं ] ऋग्यजुःसाममण्डलान्तर्गतं तर्पयामि । ॐ भूरेकपादं गायत्रीं तर्पयामि । ॐ भुवर्द्विपादं गायत्रीं तर्पयामि । ॐ स्वस्त्रिपादं गायत्रीं तर्पयामि । ॐ भूर्भुवःस्वश्चतुष्पादं गायत्रीं तर्पयामि । ॐ उषसं तर्पयामि । ॐ गायत्रीं तर्पयामि । ॐ सावित्रीं तर्पयामि । ॐ सरस्वतीं तर्पयामि । ॐ वेदमातरं तर्पयामि । ॐ पृथिवीं तर्पयामि । ॐ ज

तर्पयामि । ॐ कौशिकीं तर्पयामि । ॐ सांकृतीं तर्पयामि । ॐ सर्वापराजितां तर्पयामि । ॐ सहस्रमूर्तिं तर्पयामि । ॐ अनन्तमूर्तिं तर्पयामि ।

एभिर्मन्त्रैश्च यो नित्यं चतुर्विंशतिभिर्द्विजः ।
सुतर्पयति गायत्रीं स संध्याफलमाप्नुयात् ॥

इति गायत्रीतर्पणम् ।

## अथ जपलक्षणम् ।

शौनकः—

गायत्रीं संस्मरेद्धीमान्हृदि वा सूर्यमण्डले ।
कल्पोक्तलक्षणेनैव ध्यात्वाऽभ्यर्च्य ततो जपेत् ॥ १ ॥
प्रातस्तिष्ठञ्जपेद्देवीं सायं चैवोपविश्य च ।
उपविश्य च मध्याह्ने जपकर्म समारभेत् ॥ २ ॥
ऊर्ध्वंजानुस्तु सायाह्ने ध्यानालोकनतत्परः ।
पूर्वसंध्यां जपंस्तिष्ठन्सावित्रीमर्कदर्शनात् ।
पश्चिमां तु समासीनः सम्यङ्नक्षत्रदर्शनात् ॥ ३ ॥

## अथाङ्गुल्यादिजपमालालक्षणम् ।

अङ्गुल्यैव जपं कुर्यान्न तु काम्यं कदाचन ।
रुद्राक्षाद्यैः सर्वसिद्धिरतो मालां प्रकल्पयेत् ॥

अथ करमालयाऽक्षमालया वा जपं कुर्यात् ।

तत्र गायत्र्युच्चारणधर्मः कथ्यते ।

प्रणवं पूर्वमुच्चार्य भूर्भुवःस्वस्ततः परम् ।
गायत्रीं प्रणवं चान्ते जप एष उदाहृतः ॥ १ ॥
वाचिकाख्य उपांशुश्च मानसस्त्रिविधः स्मृतः ।
त्रयाणां जपयज्ञानां श्रेष्ठः स्यादुत्तरोत्तरः ॥ २ ॥
यदुच्चनीचस्वरितैः शब्दैः स्पर्शाद्यदाक्षरैः ।
मन्त्रमुच्चारयेद्वाचा जपयज्ञः स वाचिकः ॥ ३ ॥

शनैरुच्चारयेन्मन्त्रं मन्दमोष्ठौ प्रचालयेत् ।
अपरैरश्रुतः किंचित्स उपांशुजपः स्मृतः ॥ ४ ॥
विधानं चाक्षरश्रेण्यां वर्णाद्वर्णं परात्परम् ।
शब्दार्थचिन्तितं भूयः कथ्यते मानसो जपः ॥ ५ ॥
वाचिकस्त्वेक एव स्यादुपांशुः शतमुच्यते ।
सहस्रं मानसः प्रोक्तो मन्वत्रिभृगुनारदैः ॥ ६ ॥
ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ।
अष्टोत्तरशतं नित्यमष्टाविंशतिमेव वा ॥ ७ ॥
विधानाद्दशकं वाऽपि त्रिकाले संपजेद्द्विजः ।
श्राद्धे प्रदोषे दर्शे च गायत्रीं दशसंख्यया ॥ ८ ॥
अष्टाविंशत्यनध्याये [ यथोक्तं ] सुदिने जपेत् ।

जपान्त ऋष्यादिन्यासं विधाय गुह्यातिगुह्यमन्त्रेण जपं निवेदयेत् ।

## अथ संध्योपस्थानम् ।

मित्रोजनान्यति नवर्चमृक्सूक्तं तद्वो दिव इत्येका जातवेदसे० त्र्यम्बकं० ॐनमः प्राच्यै दिश इन्द्रायेत्यादि याजुषम् । संध्यायै नमः । सावित्र्यै नमः । गायत्र्यै नमः । सरस्वत्यै नमः । ब्रह्मणे नमः । विष्णवे नमः । शिवाय नमः । आत्मने नमः । परमात्मने नमः । अन्तरात्मने नमः । सर्वभूतात्मने नमो नमः । स्योना पृथिवीत्येका मा नस्तोक इत्येका समानीव आकूतिः० अतो देवा वर्गः भद्रं नो अपिवात० तच्छंयो० भूरादिव्याहृतिपूर्वं शान्तिं जपित्वा प्रवराद्युच्चारि- मुकशर्माऽहं भो अभिवादये । ॐ नमो महद्भ्यः । ॐ गुरुभ्यो नमः । आत्मपादौ भूमिं स्पृष्ट्वा० ।

सावित्रीं च तथा सूर्यं द्विजानप्यभिवादयेत् ।
ज्येष्ठं वाऽथ कनिष्ठं वा संध्यान्ते चाभिवादयेत् ॥ १ ॥
वर्जयेत्तु सुतं शिष्यं दौहित्रं दुहितुः पतिम् ।
नित्यं वेदमधीतारं तथा वाऽध्यापकं द्विजम् ॥

अनधीतो नमस्कुर्याज्ज्येष्ठो वाऽपि कनीयसम्।

इति प्रातःसंध्याविधिः।

## अथ मध्याह्नसंध्याविधिः।

कुर्यान्माध्याह्निकीं संध्यां ब्रह्मयज्ञादनन्तरम्।
संगवादूर्ध्वमेवाऽऽह्नर्नचेदर्वागथापि वा॥

आदौ द्विराचम्य प्राणानायम्य पूर्ववन्ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वर प्रीत्यर्थं मध्याह्नसंध्यामुपासिष्ये। आपो हि ष्ठेति मार्जनं कृत्वा आपः पुनन्त्विति मन्त्राचमनं विधाय सकृदाचम्य आपो हि ष्ठेत्यादि नवर्चं मार्जनम्, ऋतं चेति तृचेनाघमर्षणम्।

सकृदर्घ्यं तु मध्याह्ने प्रक्षिपेद्धंस इत्यृचा।
त्रिर्वाऽऽकृष्णेन मन्त्रेण गायत्र्या चेति केचन॥
उतायातं० ऋक् शेषं पूर्ववत्।

## अथ संध्यातर्पणम्।

ॐभुवःपुरुषं तर्पयामि। ॐयजुर्वेदं तर्पयामि। ॐमण्डलं तर्पयामि। ॐरुद्ररूपं तर्पयामि। ॐअन्तरात्मानं तर्पयामि। ॐसांकृतिं तर्पयामि। ॐसंध्यां तर्पयामि। ॐयुवतिं तर्पयामि। ॐरौद्रीं तर्पयामि। ॐउषसं तर्पयामि। ॐनिम्रुजं तर्पयामि। ॐसर्वार्थसिद्धिदं तर्पयामि। ॐसर्वसत्राधिपतिं तर्पयामि। ॐभूर्भुव.०। गायत्रीतर्पणे विशेषो नास्ति। द्विराचम्य उदुत्यमिति त्रयोदशर्चं सूक्तं चित्रं देवानामिति षड्ऋचं सूक्तं हंसः शुचिषदि(त्युपस्थानं)। शेषं पूर्ववदिति मध्याह्नसंध्याविधिः।

## अथ सायंसंध्याविधिः।

आचम्य प्राणानायम्य मार्जयित्वाऽग्निश्च मेति मन्त्रोदकं प्राश्य पूर्ववन्मार्जनं कृत्वाऽघमर्षणं विधायार्घ्यदानं रात्रौ चेद्वरुणाय। सरस्वतीतर्पणं कुर्यात् ॐ स्वःपुरुषं सामवेदमण्डलं विष्णुरूपिणं तर्पयामि। ॐ परमात्मानं तर्पयामि। ॐ सरस्वतीं तर्पयामि। ॐवेदमातरं तर्पयामि। ॐसांकृतिं तर्पयामि। ॐ संध्यां तर्पयामि। ॐ स्थविरां तर्पयामि। ॐ वैष्णवीं तर्पयामि। ॐ उषसं

तर्पयामि । ॐ निम्रुचं तर्पयामि । ॐ सर्वार्थसिद्धिकरीं तर्पयामि । ॐ सर्व-मन्त्राधिपतिं तर्पयामि । भूर्भुवः स्वःपुरुषं तर्पयामि । गायत्रीतर्पणं चेति शेषं पूर्ववत् । उपस्थानं यच्चिद्धितेति दशर्चं सूक्तम् । इमं मे वरुण० तत्त्वा यामि० वयमद्येन्द्रः० शेषं पूर्ववदिति सायंसंध्याविधिः ।

इत्येवं संध्यात्रयकाले संध्यादिकं कृत्वा देवतात्मा सुखं विहरेदिति प्रसङ्गतो मध्याह्नसंध्यासायंसंध्याविधिः ।

यथोचितकाले [ संध्यां ] कर्तुमशक्तश्चेन्मनसा सूर्यमण्डलं ध्यायन्मनसैव तत्तत्काले ॐ ऐं ह्रीं श्रीं परमदुष्करकर्मच्छेदिन्यघोरे वन्द्ये विद्ये माये त्रैलोक्यरूपसहस्रपरिवर्तिनि मातृगणे ह्लूं श्रीं ह्रीं ऐं ओमिति जपित्वा संध्याफलसिद्धिर्भवतीति प्रत्यङ्गिरासूत्रवचनात् । अथ प्रातःसंध्यावन्दनानन्तरं पुरश्चरणकृन्नद्यादौ स्थले ततः परमत्रैव नद्यादौ स्थले सूर्यायार्घ्यं दद्यादिति कस्याचिन्मतं पूजाप्रदेशं गत्वा नद्यादाविति वसिष्ठसंहितायामग्रे वक्ष्यते । ततो मूलानभिमन्त्रिते ( न ) जलेनाऽऽचम्य गुरुदिक्पतिग्रहान्प्रणम्य संतर्पितस्वात्मदैवतः सुदृढव्रतो मौनी देवीं हृदयकमले ध्यायन्मूलं वाऽपि स्तवं जपन्बुधः स्वपदद्दङ्मन्त्री याय द्यागस्य मण्डपमिति ।

पूजाप्रदेशमागत्य दत्त्वा चार्घ्यं विवस्वते ।
गन्धपुष्पादिभिः सम्यग्द्वारपूजां समाचरेत् ॥

तत्र गत्वा प्राङ्गणैकदेशे स्थित्वा मूलमन्त्राभिमन्त्रितेन जलेन प्राङ्मुखो वाऽप्युदङ्मुखो मौन्याजानु पादौ मणिबन्धपर्यन्तं करौ च प्रक्षाल्य द्विराचामेत् । प्राङ्गण एव गोमयप्रलिप्तभूमौ सौधमध्यां वा सूर्यायार्घ्यं दद्यात् । तद्यथा—प्राङ्मुखः सुखासन उपविष्टो गुर्वादिवन्दनपूर्वकमष्टाक्षरसूर्यमन्त्रेण प्राणायामत्रयं कृत्वा ॐ घृणिः सूर्य आदित्योमित्यष्टाक्षरमन्त्रः । ओमस्य श्रीसौराष्टाक्षरमन्त्रस्य ब्रह्मा ऋषिरादित्यो देवता गायत्री छन्दः सूर्यार्घ्यप्रदाने विनियोगः । गायत्रीमन्त्रस्य ऋष्यादिकं स्मृत्वा सूर्यात्मकमात्मानं ध्यात्वा त्रिकोणगर्भितषट्कोणं वृत्तात्मकं मण्डलं निर्माय तत्र ॐ ब्रह्मविष्णुशिवात्मकसौराय योगपीठाय नम इति संपूज्य गायत्र्यर्घमन्त्रेण शुभोदकैः पूरयित्वा सूर्यमन्त्रेण कुङ्कुमरोचनारक्तचन्दना-

दिकरवीरजपापुष्पदूर्वाक्षतान्निक्षिप्य भानुनैक्यं संकल्प्य सूर्यमन्त्रं लिखित्वा तदुपरि सूर्यं ध्यात्वाऽऽवाहनादिकं कृत्वा सूर्यमन्त्रमुच्चार्य साङ्गाय श्रीसूर्याय नम इति संपूज्य सोमाद्यष्टौ ग्रहांश्च पूर्वादिमण्डलाकारेण संपूज्य कराभ्यां पात्रमाच्छाद्य सूर्यमन्त्रमष्टोत्तरशतं द्वादशवारं ( वा ) जपित्वा पुनः सूर्यं संपूज्य गन्धादि निवेद्य सूर्यमण्डले देवीं ध्यात्वा जानुभ्यामवनीं गत आमस्तकमर्घ्यपात्रमुत्तोल्य व्योम्नि सावरणे रवौ स्वैक्येन दृष्टिं निपात्य ॐ ह्रां ह्रीं सः घृणिः सूर्य आदित्यो ग्रहनक्षत्रपरिवृताय मार्तण्डभैरवाय प्रकाशशक्तिसहिताय द्वादशकलात्मने गायत्रीरूपिणे सूर्यायैषोऽर्घ्यः स्वाहेति सावित्रीमन्त्रपूर्वकं सावित्रीदेवताबुद्ध्या पुरतो दद्यात्। ततः पुष्पाञ्जलिं कृत्वा सूर्यमन्त्रस्य जपं कृत्वा समर्प्य स्तुत्वा नत्वा भानो क्षमस्वेति संहारमुद्रया विसृजेदिति सूर्यार्घ्यविधिः। अथ सामान्यार्घ्यं कुर्यात्तद्यथा देहल्यग्रतश्चतुरस्रवृत्तत्रिकोणमण्डलं कृत्वाऽस्त्रमन्त्रेण ताम्रादिपात्रं प्रक्षाल्य साधारं स्थापयित्वा हृदयमन्त्रेण शुभोदकेनाऽऽपूर्य गङ्गे चेत्यादितीर्थमन्त्रेणाङ्कुशमुद्रया सूर्यमण्डलात्तत्र तीर्थमावाह्य ॐ कारमुच्चरन्गन्धपुष्पे प्रणवेन त्रिरभिमन्त्र्य धेनुमुद्रां प्रदर्शयेदिति सामान्यार्घ्यविधिः सर्वत्र।

## अथ द्वारपूजाविधिः।

ततस्तदर्घोदकेरस्त्रमन्त्रेण द्वारमभ्युक्ष्य गन्धपुष्पाक्षतैरम्बुपुष्पाभ्यां वा द्वारदेवताः पूजयेत्। द्वारस्थोर्ध्वशाखायाम् ॐविघ्नेशाय नमः। ॐमहालक्ष्म्यै नमः। ॐसरस्वत्यै नमः। दक्षिणशाखायां गणेशाय नमः। वामशाखायां क्षेत्रेशाय नमः। दक्षिणे गङ्गायै नमः। वामे यमुनायै नमः दक्षिणे धात्रे नमः। वामे विधात्रे नमः। दक्षिणे शङ्खनिधये नमः। वामे पद्मनिधये नमः। अधोदेहल्यामस्त्रदेवतायै नम इत्येवं पूर्वद्वारमारभ्योत्तरद्वारपर्यन्तं पूजयित्वा तत्तद्द्वाराधिपान्मन्त्रैर्यजेत्। देहल्यग्रतो दक्षिणवामक्रमेण पूर्वद्वारे ॐ ब्राह्म्यै नमः। माहेश्वर्यै नमः। दक्षिणद्वारे कौमार्यै नमः। वैष्णव्यै नमः। पश्चिमद्वारे वाराह्यै नमः। इन्द्राण्यै नमः। उत्तरद्वारे महालक्ष्म्यै नमः। चामुण्डायै नमः। मण्डपाभावे मण्डपं कल्पयित्वा तत्रैव पूजयेदिति द्वारपूजाविधिः।

ततो विघ्नापसारणं कुर्यात् । ततो मूलमन्त्रमस्त्रमन्त्रं वा मनसा जपन्दिव्यदृष्ट्या दिव्यानूर्ध्वोर्ध्वतालत्रयेणान्तरिक्षान्वामपार्ष्णिघातैस्त्रिभिर्भौमांश्च विघ्नानुत्सार्थ शनैरङ्गं संकोचयन्स्वदक्षिणांसेन द्वारशाखां स्पृशन्निजवामपादपुरःसरं गृहान्तः प्रविशेत । ततः–

> कांस्यघण्टास्वनं कृत्वा द्वारमाच्छाद्य वाससा ।
> पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयेन्मण्डपान्तरम् ॥ इति ।

ततो मण्डपान्तः पूजावेद्या बहिरुपविश्य नैर्ऋत्यां दिशि ॐब्रह्मणे नमः । ॐवास्तुपुरुषाय नम इति संपूज्य कृताञ्जलिः पठेत्–

> ॐदेवि देवं प्राकृतं चित्तं पापाक्रान्तमभून्मम ।
> तन्निःसारय चित्तान्मे पापं हुंफट् नमोऽस्तु ते ॥
> सोमः सूर्यो यमः कालो महाभूतानि पञ्च च ।
> एते शुभाशुभस्येह कर्मणो नव साक्षिणः ॥

इति मन्त्रद्वयं पठित्वा हुंफडित्यनेन क्रोधदृष्ट्या पार्श्वद्वयमूर्ध्वमधश्च निरीक्ष्य सुमना भवेत् । ततः सिद्धार्थाक्षतकुसुमं सप्तधाऽभिमान्त्रितमस्त्रमन्त्रं पठन्गृहमध्ये निक्षिपेत् ।

> तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
> भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥

इत्यनेन भैरवाज्ञां गृहीत्वा अःफडिति मन्त्रेण वेद्यां गत्वा देव्याः पूजनस्थानं विशोधयेत् । गायत्र्या भुवमाभिमन्त्र्य निरीक्ष्यास्त्रमन्त्रेण प्रोक्ष्य तेनैव दर्भैस्ताडयित्वा कवचमन्त्रेणाभ्युक्षेदिति । चतुर्विधः संस्कारो भुवः० ततश्चन्दनागरुगन्धाद्यैर्धूपयेन्मण्डपान्तरामिति ततस्तस्या वेदिकायां पुरतो देव्यासनस्थलमुत्सृज्य स्वासनभूमौ गायत्रीं प्रणवं वा विलिख्य तत्र पुष्पं दत्त्वा तदुपरि कुशाजिनाम्बरैराढ्यमेकहस्तं । हस्तं वा चतुरङ्गुलमुच्छ्रितं कम्बलाद्यन्यतमं मृद्वासनमास्तीर्य तस्य पूर्वभागे ॐभूर्दक्षिणे भुवः पश्चिमे स्वरुत्तरे भूर्भुवःस्वर्लिखित्वा मूलेन प्रणवेन वा शुभैर्जलैः संप्रोक्ष्य तत्र मातृकाम्भोजं चिन्तयित्वा पूर्ववन्मूलाधारादि पृथिव्य-

न्तमासनं संपूज्य पृथ्वि त्वयेत्याद्यभ्युक्ष्य ॐआधारकमलासनाय नम इत्यनेन गन्धपुष्पैः पूजयेदित्यासनपूजा ।

ततस्तस्मिन्नासने प्राङ्मुखोऽप्युदङ्मुखो [ वा ] स्वस्तिपद्मयोरन्यतमक्रममास्थाय ऋजुकायो निराकुलः समुपविशेत् । ततः स्वासनस्याऽऽग्नेयकोणे गं गणपतये नमः । नैर्ऋत्ये सं सरस्वत्यै नमः । वायव्यै दुं दुर्गायै नमः । ऐशान्ये क्षां क्षेत्रपालाय नमः । ततः—

शिवस्य वा हरेर्वाऽपि सूर्यस्याग्रे गुरोरथ ।
दीपस्य ज्वलितस्यापि संनिधानं प्रकल्पयेत् ॥

इत्येतेषामेकस्य समस्तानां वा सांनिध्यं परिकल्प्य द्रव्याण्यासादयेत् ।

स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि चाऽऽत्मनः ।
सुवारि ताम्बुसंपूर्णं सव्ये कुम्भं सशोभनम् ॥
प्रक्षालनाय करयोः पात्रं पृष्ठे निवेशयेत् ।
घृतादिज्वलितान्दीपान्स्थापयेत्परितः शुभान् ॥
दर्पणं चामरं छत्रं तालवृन्तं च पादुके ।
पूजासामग्रिकां विप्र पुरतः साधनान्तरम् ॥ इति ।

विश्वामित्रसंहितायाम्—

अन्यानि होमद्रव्याणि यथास्थानं निवेशयेत् ।

इति पूजाद्रव्यसाधनम् । ततस्तानि नेत्रमन्त्रेण विलोक्य रंस्वाहेति दीपशिखां स्पृष्ट्वा क्ष्रौंस्वाहेति मन्त्रेणाङ्गुल्यग्रेण जलं स्पृष्ट्वा आंस्वाहेति मन्त्रेण तत्पात्रं स्पृशेदिति पूजाद्रव्यशुद्धिः । ततः कृताञ्जलिपुटो भूत्वा वामे ॐ गुं गुरुभ्यो नमः । दक्षिणे गं गणपतये नमः । अग्रे श्रीमत्सवितृमण्डलान्तर्गतगायत्र्यै नमः । इति प्रणम्य करशुद्ध्यादिकं कुर्यात्तद्यथा प्रणवमुच्चार्य गन्धपुष्पाभ्यां करौ संमार्ज्य वामहस्तेन निर्मथ्याऽऽघ्राय तत्पुष्पमुत्तरस्यां दिशि क्षिपेत् । ततोऽङ्गुलीष्वङ्गमन्त्रान्न्यसेत् । ॐतत्सवितुर्ब्रह्मात्मने कनिष्ठिकाभ्यां नम इति षडङ्गमन्त्रानङ्गुष्ठादिक्रमेण करयोर्विन्यसेत् । तदुक्तं वसिष्ठसंहितायाम्—

आसीनः प्रणवेनाथ परामृज्य कराम्बुजे ।
अङ्गुलीषु च विन्यस्य अङ्गमन्त्राननुक्रमात् ॥
अस्त्रमन्त्रेण दिग्बन्धं कुर्यात्सर्वासु दिक्षु च ।
अग्निप्रकारवत्कृत्वा ततो मन्त्रेण सर्वतः ॥
प्राणायामत्रयं कुर्यान्मूलेन प्रणवेन वा ॥ इति ।

मन्त्रो गायत्रीमन्त्रः । इति करशुद्धिः । ततः पूर्वोक्तमार्गेण प्राणानायम्य देशकालौ स्मृत्वाऽधिकफलार्थी चेत्पुनर्भूतशुद्धिप्राणप्रतिष्ठामातृकान्यासान्स्वदेहे विधायाऽऽत्मपूजापुरःसरं संक्षेपतोऽन्तर्यागं कृत्वा बाह्यपूजां समारभेत् । तद्यथा–प्राणायामपूर्वकं गायत्रीं ध्यानोक्तां स्वैक्येन प्रथमं ध्यात्वा स्वशिरसि पुष्पं दत्त्वा पुनरपि हृदयकमले योगपीठं चिन्तयित्वा तदुपरि देवीं गायत्रीं ध्यात्वा मानसोपचारैर्यथोक्तप्रकारेण सम्यक्पूजयित्वा प्रसन्नां तां हृदि ध्यायन्दशधा गायत्रीं जपित्वा योनिमुद्रया प्रणम्य बाह्यपूजार्थं प्रथमं यन्त्रोद्धारं कृत्वा यजेत् ।

## अथ यन्त्रोद्धारविधिः ।

तदुक्तं विश्वामित्रसंहितायाम्

बिन्दुत्रिकोणं षट्कोणं ततो वृत्तत्रयं लिखेत् ।
चतुरस्रद्वयं बाह्ये चतुर्द्वारोपशोभितम ॥
बैन्दवे पूज्य गायत्रीं त्रिसंध्याश्च त्रिकोणके ।
षडङ्गानि च षट्कोणे पूजयेत्प्रयतः सुधीः ॥
अष्टारे पूजयेदष्टौ वसूनरुद्रांश्च बाह्यतः ।
क्रमेणाऽऽदित्यदेवांश्च पूर्वादिक्रमशो यजेत् ॥
ततो बाह्ये दिक्पतींश्च तत्पत्राणि ततो यजेत् ॥ इति ।

स्वर्णादिपात्रे चन्दनादिना स्वर्णादिशलाकया गुरूपदिष्टेन विधिना यथोक्तं यन्त्रं विधाय बैन्दवे चतुर्विंशत्यक्षरां गायत्रीं विलिख्य त्रिकोणे भूरादिव्याहृतित्रयं लिखित्वा चतुष्कोणे महर्जनस्तपः सत्यमिति चतुष्टयं विलिख्य शिरोमन्त्रेण संवेष्टच ॐ नमः सिद्धम् ।

अआइईउऊऋॠऌॡएऐओऔअंअः कखगघङचछजझञटठडढण तथदधनपफब-भमयरलवशषसहळक्षज्ञेति सबिन्दुकान्मातृकावर्णान्पूर्वादिप्रादक्षिण्येन वीथ्यन्तराले त्रयं विलिखेत्। इति यन्त्रं निर्माय मूलेन पुष्पं दत्त्वा पुरतः स्थापयेदिति यन्त्रोद्धारः।

अथार्घ्यस्थापनं कुर्यात्। ततः पूर्वोक्तविधिनाऽऽत्माग्रतः किंचिद्वामभाग-मवलम्ब्य सामान्यार्घ्यं स्थापयेत्। ततः स्ववामभाग चक्रमस्य दक्षिणे सामा-न्यार्घ्यजलेनैव चतुरस्रषट्कोणद( वृ )त्तत्रिकोणात्मकं मण्डलं मत्स्यमुद्रया निर्माय ॐश्रीमद्गायत्रीदेवताया अर्घ्याधारमण्डलाय नम इति पुष्पाक्षतैः संपूज्य तस्या-ङ्गानि पूजयेत्। तद्यथा—आग्नेये हृदयाय नमः। नैर्ऋत्ये शिरसे स्वाहा। वा-यव्ये शिखायै वषट्। ऐशान्ये कवचाय हुम्। मध्ये नेत्रत्रयाय वौषट्। पूर्वा-दिचतुर्दिक्षु हः अस्त्राय फट् नम इति मण्डलं पूजयित्वा मूलविद्यया त्रिपादिकां प्रक्षाल्य तत्र निधाय पूजयेत्। ॐमंवह्निमण्ड·ाय दशकलात्मने गायत्र्यर्घ्यपात्राय नम इति संपूज्य क्षकाराद्यकारान्तां विलोमां स्वाहावसानां मातृकां जपंस्तदशक्तो केवलां गायत्रीं त्रिरुच्चरन्नर्घ्यपात्रं पूरयेत्। तत ॐसोममण्डलाय षोडशकला-त्मने श्रीमद्गायत्र्यर्घ्यामृताय नम इत्यर्घ्यजलं संपूज्य गङ्गे च यमुने चेति तीर्थम-न्त्रेणाङ्कुशमुद्रया तत्र तीर्थान्यावाह्य शिखायै वषडिति गालिनीमुद्रां प्रदर्श्य गन्धाष्टकेन लोलितं पुष्पं निक्षिप्य धेनुमुद्रयाऽमृतीकृत्य गायत्र्या महामुद्रया परमी कुर्यात्। तत्र गन्धाष्टकमुक्तं वसिष्ठसंहितायाम्—

> शिह्लं गोरोचनं चन्द्रं मांसी कुङ्कुमकेसरे।
> कस्तूर्युशीरं मलयं गन्धाष्टकमुदाहृतम्॥

ततस्तत्रार्घ्यजले निजेष्टदेवतां ध्यात्वा षडङ्गन्यासेन सकलीकृत्यास्त्रमन्त्रेण छोटिकाभिर्दशदिग्बन्धनं कुर्यात्। नेत्रमन्त्रेण निरीक्ष्य शङ्खमुद्रयाऽवष्टभ्य योदीप्य ( ? ) मूलमुच्चार्य श्रीमदाराध्यदेवतायै गायत्र्यै नम इति गन्धपुष्पाक्ष-तैर्देवीं पूजयित्वा गन्धपुष्पधूपदीपान्यथाशक्ति निवेदयेत्। ततस्तदुपरि मूलम-न्त्रमष्टधा जपित्वा मत्स्यमुद्रयाऽऽच्छादयेदिति विशेषार्घ्यविधिः। ततः समान्या

र्घ्यजले विशेषार्घ्यजलबिन्दुं निक्षिपेत् । ततो दक्षिणे प्रोक्षणीपात्रं स्थापयित्वा जलेनाऽऽपूर्य तत्र विशेषार्घ्यजलबिन्दुं निक्षिप्य तेनोदकेन मूलमुच्चार्याऽऽत्मतत्त्वात्मने नमः । विद्यातत्त्वात्मने नमः । शिवतत्त्वात्मने नम इत्येभिर्मन्त्रैः स्वशरीरं त्रिः प्रोक्ष्य गायत्र्याऽऽत्मानं पूजोपकरणं चाभ्युक्ष्य ( क्षेत् )। एतदर्घ्यपात्रं पूजापवर्गपर्यन्तं न चालयेदित्यर्घ्यस्थापनाविधिः ।

## अथाऽऽत्मपूजा ।

तत्र प्रोक्षणीजलान्वितपुष्पेण गायत्रीमुच्चार्य मूलाधारे हृदये भ्रूमध्ये च संपूज्य मूल द्विब्रह्मरध्रान्तं गायत्रीमखण्डदण्डायमानतेजोरूपां विभाव्य तत्तेजोभिरेकीभूतमानन्दघनं गुरुमन्त्रदेवतानामभेदेन सावयवीकृतशरीरं निर्मलं मत्वा गन्धपुष्पधूपदीपैरात्मानं पूजयित्वाऽलंकारैर्भूषयित्वा पुन. पीठन्यासक्रमेण तत्तत्स्थानषु तत्तन्नाममन्त्रैः प्रोक्षणीयजलान्वितपुष्पैर्वा केवलपुष्पादिना मण्डूकाधारादिस्वदेहे योगपीठं पूजयित्वा तत्र गायत्रीं ध्यात्वा गायत्र्या संपूज्य गायत्रीमुच्चार्योत्तमाङ्गे हृदये मूलाधारे पदद्वये सर्वाङ्गे चेति पञ्चसु स्थानेषु पञ्चपुष्पाञ्जलिं क्षिपेत् । ततोऽन्तर्यागपुरःसरमृष्यादिन्यासपूर्वकं गायत्रीरूपमात्मानं ध्यायन्यथाशक्ति जपित्वा समर्पयेत् , ततोऽनुज्ञां गृहीत्वा भो गायत्रीदेवि त्वाभावाह्य पीठे पूजयामि ॥

## अथ योगपीठपूजा ।

तत्र पूर्वनिर्मितयथोचितगायत्रीयन्त्रमध्येऽर्घ्योदकेन संप्रोक्ष्य तत्रैव सर्वाधस्तादारभ्योपर्युपरि पूजयेत् । तद्यथा—ॐमण्डूकाधाराय नमः । कालाग्निरुद्राय नमः । मूलप्रकृत्यै नमः । आधारशक्तये नमः । कूर्माय नमः । अनन्ताय नमः । वराहाय नमः । पृथिव्ये नमः । अमृतार्णवाय नमः । रत्नद्वीपाय नमः । स्वर्णपर्वताय नमः । कल्पोद्यानाय नमः । नानारत्नमयभूमिकायै नमः । मणिमण्डपाय नमः । कल्पवृक्षाय नमः । रत्नवेदिकायै नमः । रत्नसिंहासनाय नमः । धर्माय नमः । ज्ञानाय नमः । वैराग्याय नमः । ऐश्वर्याय नमः । अधर्माय नमः । अज्ञानाय नमः । अवैराग्याय नमः । अनैश्वर्याय नमः । शेषाय नमः । पद्माय नमः । आनन्दकन्दाय नमः । सं

विन्नालाय नमः । सर्वतत्त्वात्मने योगपङ्कजाय नमः । प्रकृतिमयपत्रेभ्यो नमः । विकृतिमयकेसरेभ्यो नमः । पञ्चाशद्वर्णबीजाढ्यकर्णिकायै नमः । अं द्वादश कलात्मने सूर्यमण्डलाय नमः । उं षोडकलात्मने सोममण्डलाय नमः । मं दश कलात्मन वह्निमण्डलाय नमः । सं सत्त्वाय नमः । रं रजसे नम । तं तमसे नमः । आं आत्मने नमः । अं अन्तरात्मने नमः । प परमात्मने नमः । ह्रीं ज्ञानात्मने नमः । केसरेषु त्रिकोणेषु ब्रह्माण्यै नमः । रुद्राण्यै नमः । वैष्णव्यै नमः । षट्कोणेषु हृदयादि शिरसे स्वाहा इत्यादि ( ? ) । अष्टदलेषु ध्रुवाय नमः । अध्वराय नमः । सोमाय नमः । अद्भ्यो नमः । अनिलाय नमः । अनलाय नमः । प्रत्यूषसे नमः । प्रभावते नमः ।

दीप्ता सूक्ष्मा जया भद्रा विभूत्या वि( तिर्वि )मला तथा ।
अमोघा विद्युता चेति मध्ये श्रीः सर्वतोमुखी ॥

द्वितीयवृत्तान्तराले कल्पितैकादशदलेषु वीरभद्राय नमः । शंभवे नमः । गिरीशाय नमः । अजैकपदे नमः । अहिर्बुध्न्याय नमः । पिनाकिने नमः । अपराजिताय नम । भुवनाधीश्वराय नमः । कपालिने नमः । स्थाणवे नमः । भगाय नमः । द्वितीयान्तराले दव्यग्रादिप्रादक्षिण्येन धात्रे नमः । अर्यम्णे नमः । मित्राय नमः । वरुणाय नमः । ईशानाय नमः । भगाय नमः । इन्द्राय नमः । विवस्वते नमः । पूष्णे नमः । पर्जन्याय नमः । त्वष्ट्रे नमः । विष्णवे नमः । मध्ये बैन्दवे गायत्रीमुच्चार्य ब्रह्मविष्णुशिवाय गयत्र्यात्मने सौराय योगपीठाय नमः । इत्यूर्ध्वपुष्पं दत्त्वा तदुपरि श्रीगायत्रीमूर्तये नम इति तदुपरि ध्यानोक्तां मूर्तिं परिकल्प्य पुष्पं निक्षिपेदिति योगपीठपूजा । तत इन्द्राय नमः । अग्नये नमः । यमाय नमः । निर्ऋतये नमः । वरुणाय नमः । वायवे नमः । कुबेराय नमः । ईशानाय नमः । वज्राय नमः । शक्तये नमः । दण्डाय नमः । खड्गाय नमः । पाशाय नमः । अङ्कुशाय नमः । गदायै नमः । त्रिशूलाय नमः । इति पूजयेत् ।

अथ पाद्यार्घ्याचमनीयमधुपर्कार्थं पात्रचतुष्टयं पुरतः स्थापयित्वा साम-

न्यार्घ्यविधिना श्रीमद्गायत्रीदेवतायाः पाद्यं संधारयामि वः । एवमर्घ्यमित्या-दिमन्त्रैस्तत्तद्द्रव्यैर्जलैश्च पूजयेत् । तथा चोक्तं विश्वामित्रसंहितायाम्-

पीठपूजाविधानेन पीठं संपूज्य पूर्ववत् ।
पाद्यार्घ्याचमनीयार्थं मधुपर्कार्थमच्युत ॥
पात्राण्याधारयुक्तानि स्वर्णादिरचितानि च ।
स्थापयेत्पुरतस्तानि पूरयेच्छास्त्रवर्त्मना ॥
उशीरं रोचनां चैव यवव्रीहितिलानपि ।
आज्यं सिद्धार्थपुष्पाणि क्षिपदर्घ्यस्य पात्रके ॥
माक्षिकं शर्करा सर्पिर्दधिक्षीरयुतं तथा ।
मधुपर्कं कल्पयित्वा प्रदद्याद्विधिपूर्वकम् ॥

वसिष्ठसंहितायाम्-

पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताजलैः स्मृतम् ।
अर्घ्यं पुष्पाक्षतयवकुशाग्रतिलसर्षपैः ॥
गन्धदूर्वाजलैः प्रोक्तं ततश्चाऽऽचमनीयकम् ।
जातीफलं च कङ्कोलं लवङ्गं सजलं त्विदम् ॥
आज्यं दधि मधून्मिश्रं मधुपर्कः समीरितः ।

तदेतयोर्विकल्पे तु वसिष्ठसंहितोक्तान्येवाशक्तौ तु पूर्वोक्तानि । अत्यन्ताशक्तौ तु-

एकस्मिन्नथवा पात्रे पाद्यादीनि प्रकल्पयेत् ।
सर्वोपचारवस्तूनामभावाद्भावयेद्धिया ॥

इति ज्ञेयम् ।

एवमासाद्य पात्राणि तत्र पीठं निधाय च ।
मूलेन मूर्तिं संस्थाप्य ध्यात्वा देवीं यथोचिताम् ॥
आवाह्य पूजयेत्तस्यां परिवारगणैः सह ।

ततः पञ्चायतनक्रमाच्चेद्देव्याः पीठस्य नैर्ऋत्यादिकोणचतुष्टये गणपत्यादि-

चतुरो देवान्देव्याः पौरुषविभूतिरूपांस्तत्तत्स्थानेषु पृथक्पृथक्पूजयित्वा मध्ये यन्त्रराजे महादेवीं गायत्रीं पूजयेत् । तथा चोक्तम्—

नैर्ऋत्ये गणनाथं च सूर्यं वायव्यकोणके ।
ऐशान्ये विष्णुमीशानमाग्नेये शक्तिपूजने ॥

शक्तिस्तु गायत्र्येव । अत आह विश्वामित्रः—

सर्वे शाक्ता द्विजातीनां न शैवा न च वैष्णवाः ॥
ब्रह्मविद्यामुपासीत गायत्रीं वेदमातरम् ॥ इति ।

तत्र—यष्टुरभिमुखा देवा देवाभिमुखतो दिशः ।
प्राच्यादिरहिता ज्ञेयाः पूजाहोमादिकर्मसु ॥

इति वचनानुसारात्प्रादक्षिण्येन पूर्वादिकं कल्पयित्वा नैर्ऋत्यादिकं ज्ञात्वा तदारभ्य पूजयेदिति सर्वत्र । तद्यथा—प्रथमं नैर्ऋत्ये गणपतिं पूजयेत् ।

ॐ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात् । वायव्ये ॐ आदित्याय विद्महे सहस्रकराय धीमहि तन्नः सूर्यः प्रचोदयात् । ऐशान्ये ॐ नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् । आग्नेये ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् । इति तत्तत्स्थानेषु पूजयेत् । मध्ये श्रीदेवीगायत्रीं साङ्गां सपरिवारां सवाहनां सालंकारां सायुधां ब्रह्मविष्णुरुद्ररूपां पूजयेत् । तद्यथा—प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गन्यासं विधाय प्रणवेन कराभ्यां पुष्पाञ्जलिमादाय मातृकाम्भोजत्वेन कल्पयित्वा पूर्ववद्रूपां भगवतीं हृदि ध्यात्वा मानसोपचारैर्यथाविधि पूजयित्वा तत्रैव तेजोरूपां नीत्वा तस्मात्तेजसो हृदयात्सुषुम्नानाडीमार्गेण ब्रह्मरन्ध्राद्वामनासारन्ध्रेण वायुमापूर्य कुम्भयित्वा दक्षिणनाड्या सूर्यमार्गेण करस्थपुष्पाञ्जलौ तत्तेजो निःसार्य दीपाद्दीपान्तरमिव निर्गतं नित्यानन्दगणोदयं देवीतेजो मलमुच्चार्य साङ्गे सपरिवारे भगवति श्रीमत्सावित्रि ब्रह्मवादिनि श्रीदेवि गायत्रि -

एह्येहि देवि मद्धस्तपादुकाभ्यां दयानिधे ।
आसन कल्पयामीदमास्यतां कृपया शिवे ॥

इत्यनेनाऽऽनीय प्रणवेन ब्रह्मरन्ध्रं नीत्वा तस्यां मूर्तौ प्रवेश्य पद्ममुद्रां प्रदर्श्य सिंहासनमुद्रां प्रदर्शयेत् । तत आवाहनसंस्थापनसंनिधीकरणसंनिरोधनसंमुखी-

करणसंकलीकरणावगुण्ठनामृतीकरणपरमीकरणानीति नवसंस्कारांस्तत्तन्मुद्राभिः कुर्यात् । तद्यथा–गायत्रीमुच्चार्य भगवति श्रीमद्गायत्रीहाऽऽगच्छेत्यनामिकाद्वय मूलार्पिताङ्गुष्ठद्वयकोर्ध्वाञ्जल्यधःकरणरूपयाऽऽवाहिन्या मुद्रयाऽऽवाह्य तथैव तिष्ठ तिष्ठेत्यधोमुखरूपया संस्थापिन्या संस्थाप्य हृदयमन्त्रमुच्चार्य भगवति श्रीमद्देवि गायत्रीह संनिधेहीत्युच्छ्रिताङ्गुष्ठद्वयसंयोगरूपया संनिधायिन्या मुद्रया संनिधीकृत्य तथैव संनिरुध्यस्वेत्यन्तरङ्गुष्ठया संनिरोधिन्या मुद्रया संनिरुध्य गायत्रीकवचमन्त्रमुच्चार्य श्रीमद्देवि गायत्रीह संमुखी भवेत्युत्तानमुष्टियुगलरूपया संमुखीकरिण्या मुद्रया संमुखीकृत्य देवताषडङ्गन्यासेन सकलीकृत्य परितोभ्रामिताधोमुखतर्जन्यैकवामकरमुष्टिरूपयाऽवगुण्ठनमुद्रया श्रीमद्गायत्रीहावगुण्ठिता भवेत्यवगुण्ठ्य वमिति धेनुमुद्रयाऽमृतीकृत्य द्वाप्रणवसंयुक्तां गायत्रीमुच्चार्य महामुद्रया परमीकुर्यादिति नव संस्काराः ।

आवाहनादिहीनेन कृता पूजा निरर्थका ।
विपरीतफलं दद्यादभक्त्या चार्चनं यथा ॥

ततो गायत्र्या मूर्तेः प्राणप्रतिष्ठां कुर्यात् । ॐ आं ह्रीं क्रौं यंरंलंवंशंषंसंहंळंक्षंहंसः सोऽहं श्रीगायत्र्याः प्राणा इह प्राणाः । ॐ आमित्यादि गायत्र्या जीव इह स्थितः । ॐ आमित्यादि सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्ररसनाघ्राणपाणिपादपायूपस्थप्राणा इहाऽऽगत्य सुखं चिरं तिष्ठन्तु स्वाहेति जपित्वा देवीमूर्तेर्वक्षः स्पृष्ट्वा त्रिर्जपेत् । ततोऽधिकफलार्थी गायत्रीसंपुटितैरकारादिक्षकारान्तैः पुनर्विलोमेन क्षकाराद्यकारान्तैर्मातृकावर्णैः सबिन्दुभिरात्मवद्देवीदेहे व्यापयेत् । तद्यथा ॐभूर्भुवः स्वः तत्सवितु० अं० क्षं ५० क्षं० अं ५० ॐभूर्भुवः स्वः तत्सवितु० ॐ ।

गायत्रीपुटितां ब्रह्मन्मातृकाक्षरमालिकाम् ।
अनुलोमविलोमेन याजयेत्संप्रसन्नधीः ॥
चिन्तितार्थमवाप्नोति इत्युक्तं ब्रह्मणा पुरा । इति वचनात् ।

ततः पीठमध्ये सर्वावयवभावेन देवीं ध्यायन्योनिमुद्रां प्रदर्शयेत् । ततो गायत्रीमन्त्रमुच्चार्य श्रीमद्देवि सावित्रि पुष्पं प्रतच्छि स्वाहा साङ्गायै सायुधायै

सपरिवारायै सर्वात्मिकायै भगवत्यै श्रीसावित्र्यै नम इति पुष्पाञ्जलित्रयेण संपूज्य स्वागताद्युपचारान्कुर्यात् तत्तु विश्वामित्रसंहितायामुक्तम् ·

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्कं तथा स्नानवस्त्रालंकरणानि च ॥
गन्धपुष्पे धूपदीपौ नैवेद्यं मुखवासनम् ।
नमस्कारं षोडशं च कल्पयेद्देवताप्रियम् ॥
प्रयोजयेत्पूजनार्थं द्वाद( षोड )शैतानानुक्रमात् ।
गन्धादयो निवेद्यान्ताः पूजा पञ्चोपचारिकी ॥
सपर्यास्त्रिविधाः प्रोक्तास्तासामेकां समाश्रयेत् ।

एवमेव सर्वपूजाकल्पेषु ज्ञेयम् । तत्र सर्वत्र संमतत्वात्षोडशोपचारपूजाक्रमो लिख्यते । तत्राऽऽसनं दत्तमेव मूलमुच्चार्य मूल गा॰त्रीमन्त्रः । भगवति देवि गायत्रि स्वागतं त इति कुशलप्रश्नं कृत्वा मूलेन स्वागतमुद्रां प्रदर्श्य मूलमुच्चार्य चतुर्थ्यन्तनाम्ना पुष्पाञ्जलिं क्षिपेत् । श्रीमद्देवि पुष्पं प्रतीच्छ स्वाहा साङ्गायै सपरिवारायै पाद्यं परिकल्पयामि नम इत्यनेन मन्त्रेण तत्पाद्यपात्रं पूर्वोक्तमामस्तकमुद्धृत्य देव्याः पादयोर्दद्यात् । ततो मूलमुच्चार्य श्रीमद्गायत्र्यै नम इति पुष्पाञ्जलिं क्षिपेत् । ततः पुनरपि पूर्ववदर्घ्यं दे॰॰ः शिरसि दद्यात् । मूलेनाऽऽचमनीयं मुखे दद्यात् । म॰ुपर्कं कल्पयामि स्वधेति मुखे । स्नानवस्त्रं दत्वाऽऽत्मदक्षिणे भागे कल्पितरत्नमण्डपं नीत्वा सिंहासनमुद्रां प्रदर्श्य पाद्यमर्घ्यं निवेद्य महाराजाभिषेकवन्मनसैव देवीं स्नापयेत् । आचमनं केशोद्वर्तनं ( च ) दद्यात् । एतेऽवान्तरत उपचारा गुरुमुखतो ज्ञेयाः । ततो वमिति वासः प्रोक्ष्य ॐ बृहस्पतिदैवताय वाससे नम इति संपूज्य वासो दत्त्वा परि॰ाप्य पुनस्तथैवाऽऽचमनीयं ततोऽलंकारान्पूर्ववदभ्युक्ष्य ॐ विष्णुदैवतेभ्योऽलंकारेभ्यो नम इति पूजयित्वा मूलान्ते श्रीदेवि पुष्पं प्रतीच्छेत्युत्सृज्य यथास्थानं मुकुटादिभिर्भूषयित्वा पञ्चवाद्यपुरःसरं पुनर्यागपीठं नयेत् । अत्र सर्वत्र तत्तदुपचारद्रव्याणामभावाद्भावयेदिति ज्ञेयम् । ततो वमिति धेनुमुद्रया जलममृतीकृत्य मूलमुच्चार्य भगवति—

नमस्ते देवदेवेशि सर्वतृप्तिकरं परम् ।

अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् ॥

अमृतानन्दसंपूर्णं गृहाण जलमुत्तमम् ।

इत्यनेन मन्त्रेण देवीमुखे जलं दद्यात् । एवमेव सर्वत्र जलदानम् । ॐ विष्णुदैवतभ्यो गन्धेभ्यो नम इति संपूज्य मूलान्ते साङ्गायै सपरिवारायै गायत्र्यै गन्धं परिकल्पयामीति पूर्वोक्तगन्धाष्टकेन गन्धं समर्पयेत् । तत ॐ वनस्पतिदेवाय पुष्पाय नम इति संपूज्य श्रीदेव्यै पुष्पं परिकल्पयामि वौषडित्यनेन मुकुटोपर्यूर्ध्व-मुखं पुष्पं दद्यात् । नमो दुर्गादेवतायै मालायै नम इति संपूज्य मालां श्रीगायत्र्यै दद्यात । ततः साङ्गारं धूपपात्रमानीय धूपेनाभ्युक्ष्य तत्रागुरुशीरगुग्गुलशर्करासं-गमचूर्णानि मधुघृतयुक्तानि निक्षिप्य धेनुमुद्रयाऽमृतीकृत्य गन्धर्वदैवताय धूपाय नम इति संपूज्य पूर्ववद्दद्यात् । ॐ गजध्वनिमन्त्रमातः स्वाहा साङ्गायै श्रीगायत्र्यै धूपं परिकल्पयाम्यस्त्राय फडित्यस्त्रमन्त्रेण पूजितां घण्टां वामकरेण वादयन्दक्षिणेन धूपपात्रमादाय धूपं विस्तारयन्वनस्पतिरसेत्यनेन नीचैर्धूपं निवेदयेत् । देव्या वामतो वा पुरतो वा तत्पात्रं निदध्यात् । ततो वर्त्या कर्पूरगर्भिण्याऽगरुगर्भिण्या वा सुरभिघृतपूरितं तैलपूरितं वा जाज्वल्यमानं दीपमानीय ॐ विष्णुदैवताय घृतप्रदी-पाय नम. मूलान्ते संबोध्य–

ॐ सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ।

सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

इत्यनेन पारावतभ्रमाकारं देव्या नेत्रादि पादान्तं पुनः पादादि दृष्टयन्तं त्रिर्देवीं दीपं प्रदर्शयेत् । ततो घृतदीपं देव्या दक्षिणेऽन्यं वामे स्थापयेत । इत्थ-मुपचारैर्देवीं पूजयित्वा पूर्ववन्मूलमुच्चार्य पुष्पाञ्जलिं निक्षिप्य–

सच्चिन्मयि परे देवि गायत्रि ब्रह्मरूपिणि ।

आज्ञापय त्वं सावित्रि परिवारार्चनाय मे ॥

इत्यनेन देव्या शिरसि पुष्पाञ्जलिं निक्षिप्याऽऽज्ञां गृहीत्वा वरुणदेवतां पूजयेत् । तत्राऽऽदौ यन्त्रशिरसि ॐ विश्वामित्रऋषये नमः । ततस्त्रिकोणेषु ॐ प्रातःसंध्यायै गायत्र्यै नमः । मध्याह्नसंध्यायै सावित्र्यै नमः । सायंसंध्यायै

सरस्वत्यै नमः । षट्कोणेष्वङ्गदेवताः पूजयेत् । ॐ तत्सवितुर्ब्रह्मात्मने हृदयाय नम आग्नेये । वरेण्यं विष्ण्वात्मने शिरसे स्वाहा नैर्ऋत्ये । भर्गो देवस्य रुद्रात्मने शिखायै वषट् वायव्ये । धीमहि सत्यात्मने कवचाय हुं ऐशान्ये । धियो यो नो ज्ञानात्मने नेत्रत्रयाय वौषडग्रतः । प्रचोदयात्पर ब्रह्मात्मनेऽस्त्राय फट् पश्चिमतः ।

तुषारस्फटिकश्यामाः कृष्णनीलारुणार्चिषः ।
वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ॥

इत्यङ्गदेवता ध्यात्वा गन्धपुष्पाक्षतान्विताञ्जलिना संपूज्य गायत्री मुच्चार्य—

चतुर्वर्गफलं देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

इत्यनेन देव्यै समर्पयेदित्येवमुत्तरत्रापि ॥ १ ॥ ततोऽष्टदलेषु पूर्ववत् । ध्रुवाय नमः । अध्वराय नमः । सोमाय नमः । अद्भयो नमः । आनिलाय नमः । अनलाय नमः । प्रत्यूषाय नमः । प्रभाताय नम इति द्वितीयमावरणम् ॥ २ ॥ तद्बहिर्वीरभद्राय नमः । शंभवे नमः । गिरिशाय नमः । अजैकपदे नमः । अहिर्बुध्न्याय नमः पिनाकिने नमः । अपराजिताय नमः । भुवनाधीश्वराय ममः । कपालिने नमः । स्थाणवे नमः । भगाय नमः । इति तृतीयावरणम् ॥ ३ ॥ ततो धात्रे नमः । अर्यम्णे नमः । मित्राय नमः । वरुणाय नमः । ईशानाय नमः । भगाय नमः । इन्द्राय नमः । विवस्वते नमः । पर्जन्याय नमः । त्वष्ट्रे नमः विष्णवे नमः । इति चतुर्थमावरणम् ॥ ४ ॥ इन्द्राय नमः । अग्नये नमः । यमाय नमः । निर्ऋतये नमः । वरुणाय नमः । वायवे नमः । सोमाय नमः । [ कुबेराय नमः ] । ईशानाय नमः । इति पञ्चमावरणम् ॥ ५ ॥ वज्राय नमः । शक्तये नमः । दण्डाय नमः । खड्गाय नमः । पाशाय नमः । अङ्कुशाय नमः । गदायै नमः । त्रिशूलाय नमः । इति षष्ठमावरणम् ॥ ६ ॥

एताः सर्वावरणदेवताः स्त्रीरूपा ध्यायेत् । तद्यथा–ॐ ळां इन्द्रायैरावतवाहनाय देवाधिपतये पीतवर्णाय वज्रहस्ताय दिव्यस्त्रीरूपाय साङ्गाय सपरिवाराय नमः । ॐ शां अग्नये मेषवाहनाय तेजोधिपतये कपिलवर्णाय शक्तिहस्ताय दिव्यस्त्रीरूपाय नमः । ॐ षां यमाय श्यामवर्णाय महिषवाहनाय प्रेताधिपतये कृष्णदण्डहस्ताय दिव्यस्त्रीरूपाय नमः । ॐ क्षां निर्ऋतये रक्षोधिपतये धूम्रवर्णाय प्रेतवाहनाय खड्गहस्ताय दिव्यस्त्रीरूपाय नमः । ॐ वां वरुणाय मकरवाहनाय यादोधिपतये श्वेतवर्णाय पाशहस्ताय दिव्यस्त्रीरूपाय नमः । ॐ यां वायवे मृगवाहनाय प्राणाधिपतये धूम्रवर्णायाङ्कुशहस्ताय दिव्यस्त्रीरूपाय नमः । ॐ सों सोमाय तुरगवाहनाय ताराधिपतये निर्मलाय गदाहस्ताय दिव्यस्त्रीरूपाय नमः । ॐ सं कुबेराय यक्षाधिपतये मौक्तिकवर्णाय गदाहस्ताय नरवाहनाय दिव्यस्त्रीरूपाय नमः । ॐ हां ईशानाय वृषभवाहनाय रुद्राधिपतये सितवर्णाय शूलहस्ताय दिव्यस्त्रीरूपाय नमः । इन्द्रेशानयोर्मध्य ऊर्ध्वं ॐ आं ब्रह्मणे हंसवाहनाय प्रजाधिपतये रक्तवर्णाय पद्महस्ताय दिव्यस्त्रीरूपाय नमः । निर्ऋतिवरुणयोर्मध्ये अधः ॐ श्रीं शेषाय कूर्मवाहनाय नागाधिपतये चक्रहस्ताय स्वर्णवर्णाय दिव्यस्त्रीरूपाय नम इति दिक्पतीन्पूजयित्वा पञ्चमावरणं ( पूजयेत् ) । वज्रादिभिः षष्ठमावरणम । तेषां ध्यानम्–

पीतशुक्लासिताश्यामशाविद्युद्रक्ताः सितासिताः ।
कोकनदपाटलाभा वज्राद्याः परिकीर्तिताः ॥

इत्थमावरणानि पूजयित्वा पूर्ववन्मूलविद्यया गन्धपुष्पाक्षताञ्जलित्रयेण गायत्रीमाराध्य मूलेनैव पाद्यार्घ्याचमनीयानि दद्यात् । तदुक्तं विश्वामित्रसंहितायाम्–

आदावन्ते च पूजाया नमेच्च मूलविद्यया ।
पाद्यार्घ्याचमनीयानि दद्यादेतानि देशिकः ॥

ततो नैवेद्यं निवेदयेत् । चर्व्यचोष्यलेह्यपेयेति चतुर्विधमन्नं षड्रसं तं स्वर्णादिभाजनस्थं समानीय पुरतश्चतुष्कोणमण्डलोपरि साधारं स्थापयित्वा गायत्र्या निरीक्ष्य प्रणवेनार्घ्योदकेन संप्रोक्ष्य तेनैव पुष्पं निक्षिपेत् । ततो वमिति

धेनुमुद्रयाऽमृतीकृत्य गायत्र्या महामुद्रया परमी कुर्यात् । ततो गायत्रीमुच्चार्य सावित्रि पुष्पं प्रतीच्छ स्वाहा साङ्गायै सायुधायै सवाहनायै सपरिवारायै सर्वात्मिकायै भगवत्यै श्रीमद्गायत्र्यै नैवेद्यं परिकल्पयामि नम इति मन्त्रेण नैवेद्ये जलमर्पयेत् । ततः ॐ अमृतापस्तरणमसि स्वाहेति देव्या हस्ते जलं दद्यात् । ततो वामकरेण विकचोत्पलसंनिभां ग्रासमुद्रां प्रदर्श्य दक्षिणकरेण समन्त्रकं प्राणादिमुद्राः प्रदर्शयेत् । तद्यथा—ॐ प्राणाय स्वाहेत्यङ्गुष्ठतर्जनीमध्यमाभिः । ॐ अपानाय स्वाहेत्यङ्गुष्ठमध्यमानामिकाभिः । ॐव्यानाय स्वाहेत्यङ्गुष्ठानामिकाकनिष्ठिकाभिः । ॐउदानाय स्वाहेत्यङ्गुष्ठतर्जनीकानिष्ठिकाभिः । ॐसमानाय स्वाहेति सर्वाभि. । ततो नैवेद्यमुद्रां प्रदर्शयेत् । प्रधानया करद्वये( यं ) स्पृशन्नामिकां निजां प्रमनुं जपन्प्रदशयेत् । ततो मूलविद्यामुच्चार्य ॐभगवति श्रीमत्सावित्रि—

सत्पात्रे सद्धविः सान्नं विविधानेकभक्षणम् ।
निवेदयामि ते देवि सानुगायै जुषस्व तत् ॥

इत्यनेन मन्त्रेण तत्र नैवेद्ये देव्यग्रे पुष्पाञ्जलिं क्षिपेत् । ततश्च मुद्रां दर्शयित्वा मूलमन्त्रमष्टधा जपित्वा मत्स्यमुद्रयाऽऽच्छादयेत् । ततोऽस्त्रेण दिशो वेष्टयेत् । ततो भुञ्जानां गायत्रीं ध्यायेत्—

ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समेता
 दिव्याभिः स्वैर्ललितललितैर्वीज्यमानाऽङ्गनाभिः ।
नर्मक्रीडाप्रहसनपरा हासयन्ती स्वभक्ता
न्भुङ्क्ते पात्रे कनकघटिते षड्रसान्श्रीविधात्री ।

अत्रावसरे पूजाङ्गहोमं कुर्यात् । तदुक्तं वसिष्ठसंहितायाम्—

भोजनावसरे मन्त्री वैश्वदेवं समाचरेत् ।
दक्षिणे स्थण्डिलं कृत्वा तत्राऽऽधाय हुताशनम् ॥
संस्कृत्य विधिना विद्वान्वैश्वदेवं समाचरेत् ।
तत्र संपूज्य गन्धाद्यैर्गायत्रीमुक्तविग्रहाम् ॥
सप्तव्याहृतिभिर्हुत्वा गन्धाद्यैः पुनरर्चयेत् ।

देवतां योजयेत्पीठमूर्तौ वह्निं विसर्जयेत् ॥
अवशिष्टेन हविषा विकिरेत्परितो बलिम् ।
देवतायाः पार्षदेभ्यो गन्धपुष्पाक्षतान्वितम् ॥ इति ।

स्थण्डिललक्षणं तत्रैव –

नित्यं नैमित्तिकं होमं स्थण्डिले वा समाचरेत् ।
हस्तमात्रं हि तत्कुर्याद्वालुकाभिः सुशोभनम् ॥
अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समन्ततः ।
सर्पिषा वा तिलैर्वाऽपि भक्तेन पायसेन वा ॥
जुहुयात्साधकश्रेष्ठश्चतुर्विंशतिसंख्यया ।

विश्वेषां देवानामयं वैश्वदेवः स्वेष्टदेवताहोमस्तस्यैव सर्वेषां तृप्तिहेतुत्वात् । तदा स्वात्मन्येव विसर्जनम् । अग्निस्थापनादिकमग्रे वक्ष्यते । ततः पार्षदबलिमन्त्रः––

ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।
योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्च ये ॥
विघ्नभूतास्तथा चान्ये दिग्विदिक्षु समाश्रिताः ।
ते सर्वे तृप्तिमनसः प्रतिगृह्णन्त्विमं बलिम् ॥
गन्धपुष्पाक्षतान्वितबलिमष्टदिक्षु विकिरेत् ।
भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम् ।
अन्यत्र वासं परिकल्पयन्तु क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः ॥

इत्यनेनाष्टदिक्षु विकिरेदिति भूतबलिः । ततो गायत्र्या विभूतितिलकं धृत्वा पुनः पूजास्थानं गत्वा शक्तश्चेदस्मिन्नेवावसर आरात्रिकं कुर्यान्नो चेदारात्रिकमुद्रां प्रदर्शयेत् । ततः सुतृप्तां देवीं ध्यात्वा धेनुमुद्रया जलममृतीकृत्य, अमृतापिधानमसि स्वाहेति देवीमुखे जलं दद्यात् । ततो गतसारं नैवेद्यं किंचिदुद्धृत्य ॐ ह्रीं तेजश्चण्डेश्वर्यै नम इति देव्युच्छिष्टभुजे ऐशान्यां दद्यात् ।

ततो नैवेद्यमुद्धृत्य नैर्ऋत्यां दिशि धारयेत्।
तत्स्थानं शोधयित्वा च देवीमाचामयेद्बुधः॥

तत्र मुखादिप्रक्षालनं दन्तधावनं पुनर्मुखप्रक्षालनं हस्तास्यमार्जनं पुनराचमनीयं मुखवासं च दद्यात्। ततो देव्यै ताम्बूलं निवेदयेत्। ततः सुखोपविष्टां सपरिवारां प्रसन्नां देवीं ध्यात्वा प्रसन्नार्घ्यं दत्त्वा गन्धपुष्पधूपदीपैः पूजयेदिति प्रसन्नपूजाविधिः। तत्र आरात्रिकं दद्यात्। तत्र यथाविधिविहितमारात्रिकपात्रमानीय चक्रमुद्रां प्रदर्श्य वमिति धेनुमुद्रयाऽमृतीकृत्य मूलेनाभ्यर्च्याऽऽमस्तकमुत्तोल्य मूलमुच्चार्य ॐभगवति श्रीमद्देवि गायत्रि

समस्तदेवताचक्रमनिपतगणावृत।
आरात्रिकं गृहाणेदं सावित्रि मम सिद्धये॥

इत्यनेन घण्टावादनपूर्वकं पारावतभ्रमाकारमुच्चैर्देवीं नीराजयेत्। ततश्छत्रचामर दर्शयेन्नानोपभूषणान्यप्यवसाने दद्यान्नृत्यगीतं च कारयेत्। [मन्त्रपुष्पाञ्जलिं समर्पयेन्नमस्कारांश्च]। ततो मूलेन प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गन्यासपूर्वकं जपमालामानीय क्वचित्पात्रे वामहस्ते वा स्थापयित्वा मूलमन्त्रेणार्घ्योदकेनाभ्युक्ष्य—

ॐ मां माले महामाये सर्वशक्तिस्वरूपिणि।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव॥

इत्यनेन गन्धपुष्पाभ्यां संपूज्य—

ॐ गं आविघ्नं कुरु माले त्वं गृह्णामि दक्षिणे करे।
जपकाले तु सततं प्रसीद मम सिद्धये॥

इति मन्त्रेण दक्षिणहस्तेनाऽऽदाय स्वशिरसि गुरुं कण्ठ मन्त्रं हृदये देवीं गायत्रीं ध्यायन्हृदयसमीपे मालामानीय दक्षहस्तमध्याङ्गुलिमध्यपर्वणि संस्थाप्य तदेकाग्रचित्तो गायत्र्याश्चरणकमलचित्तवृत्तिः सन्गायत्र्यर्थं स्मरन्सहस्रत्रिशतमष्टोत्तरशतं वा प्रणवव्याहृतिपूर्वकं तत्सवितुरित्यृचमन्ते प्रणवं चोच्चार्य यथाविधि जपेत्करमालया वा। पुरश्चरणे त्वक्षमालयैव।

नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन।

इति वसिष्ठवचनात् । अत्रापि करमालयेति कश्चित्तदशक्तौ ज्ञेयमिति । ततः संख्यापूर्तौ पुनः प्रणवमुच्चार्य जपं समाप्य—

ॐ त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम ।
शुभं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा ॥

ॐ ह्रीं सिद्धये नम इति मालां पञ्चाक्षर्या शिरसि संस्थाप्य पुनः प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गन्यासपूर्वकं सावित्रीं ध्यात्वा तस्या वामहस्ते वसिष्ठमते दक्षिणहस्ते वाऽर्घ्योदकेन जपम् -

ॐ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥

इति मन्त्रेण समर्प्य देव्यग्रे पुष्पाञ्जलिं क्षिपेत् । तत ॐ ह्रीं सिद्धयै नम इति पञ्चाक्षरमालामन्त्रेण पुनर्मालां संपूज्य रहसि स्थापयेदिति सर्वत्र पुरश्चरणेऽप्येवमेव ।

नात्युच्चं नातिनीचं च ध्यात्वा मन्त्रं जपेन्मनुम् ।
बलिं दत्त्वा नमस्कृत्य स्तुत्वा देवीं विसर्जयेत् ॥

अग्रतश्चतुरस्रवृत्तत्रिकोणमण्डलं कृत्वा तत्र गायत्रीं ध्यात्वा मूलेन पुष्पाक्षतैः संपूज्य चतुष्पदां गायत्रीमुच्चार्य यथालाभान्नादिना नित्यं बलिं दद्यात् ।

ततो घण्टाचामरादिभिर्देवीं परितोषयेत् ।
ततो गायत्रीकवचं स्तोत्रं वा समुदीरयेत् ॥

तान्त्रिकपौराणिकवैदिकैः स्तोत्रैर्मूलेन च स्तुत्वा पुष्पाञ्जलिं दत्त्वा साष्टाङ्गं प्रणमेत । तान्त्रिकस्तोत्रमुक्तं वसिष्ठसंहितायाम्—

नमस्ते देवि गायत्रि सावित्रि त्रिपदेऽक्षरे ।
अजरे अमरे मातस्त्राहि मां भवसागरात् ॥ १ ॥
नमस्ते सूर्यसंकाशे सूर्यसावित्रिकेऽमले ।
ब्रह्मविद्ये महाविद्ये वेदमातर्नमोऽस्तु ते ॥ २ ॥

अनन्तकोटिब्रह्माण्डव्यापिनि ब्रह्मचारिणि ।
नित्यानन्दे महामाये परेशानि नमोऽस्तु ते ॥ ३ ॥
त्वं ब्रह्मा त्वं हरिः साक्षाद्रुद्रस्त्वं चेन्द्रदेवता ।
मित्रस्त्वं वरुणस्त्वं च त्वमग्निरश्विनौ भगः ॥ ४ ॥
पूषाऽर्यमा मरुत्वांश्च ऋषयोऽपि मुनीश्वराः ।
पितरो नागयक्षाश्च गन्धर्वाप्सरसां गणाः ॥ ५ ॥
रक्षोभूतपिशाचाश्च त्वमेव परमेश्वरि ।
ऋग्यजुःसामविद्याश्च अथर्वाङ्गिरसानि च ॥ ६ ॥
त्वमेव सर्वशास्त्राणि त्वमेव पूर्वसंहिताः ।
पुराणानि च तन्त्राणि महागममतानि च ॥ ७ ॥
त्वमेव पञ्च भूतानि तत्त्वानि जगदीश्वरि ।
ब्राह्मी सरस्वती संध्या तुरीया त्वं महेश्वरी ॥ ८ ॥
तत्सद्ब्रह्मस्वरूपा त्वं किंचित्सदसदात्मिका ।
परात्परेशी गायत्रि नमस्ते मातरम्बिके ॥ ९ ॥
चन्द्रे कलात्मिके नित्ये कालरात्रि स्वधे स्वरे ।
स्वाहाकारेऽग्निवक्त्रे त्वां नमामि जगदीश्वरि ॥ १० ॥
नमो नमस्ते गायत्रि सावित्रि त्वां नमाम्यहम् ।
सरस्वति नमस्तुभ्यं तुरीये ब्रह्मरूपिणि ॥ ११ ॥
अपराधसहस्राणि त्वसत्कर्मशतानि च ।
मत्तो जातानि देवेशि त्वं क्षमस्व दिने दिने ॥ १२ ॥

ततः कृताञ्जलिकरः—

यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
निवेदितं च नैवेद्यं तद्गृहाणानुकम्पया ॥ १ ॥
आवाहनं न जानामि न जानामि तवार्चनम् ।
पूजाभागं न जानामि त्वं गतिः परमेश्वरि ॥ २ ॥

संध्यां स्नानं जपं होमं ध्यानं तर्पणमेव च ।
न जानामि न जानामि सावित्रि त्वं गतिर्मम ॥ ३ ॥

कर्मणा मनसा वाचा गायत्रि त्वं गतिर्मम ।
अन्तश्चारेण भूतानां द्रष्ट्री त्वं परमेश्वरि ॥ ४ ॥

नाथे योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषु तेष्वच्युता भक्तिरच्युतेऽस्तु सदा त्वयि ॥ ५ ॥

देवी दात्री च भोक्त्री च देवी सर्वमिदं जगत् ।
देवी जयति सर्वत्र या देवी साऽहमेव च ॥ ६ ॥

यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ।
क्षन्तुमर्हसि देवेशि कस्य न स्खलितं मनः ॥ ७ ॥

यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ॥ ८ ॥

इति प्रदक्षिणीकृत्य प्रणम्य गुरुं स्मृत्वा पूजयित्वा प्रणम्यार्घ्योदकेन देव्य स्वात्मानमर्पयेत् । इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा । मां मदीयं च सर्वं श्रीमद्देव्यै गायत्र्यै स्वेष्टदेवतायै समर्पये ॐ तत्सत् । ततो मूलमन्त्रेण योनिमुद्रया प्रणम्य देवीं विसर्जयेत् । तत्र विशेषार्घ्यं चालयित्वा मूलेन देव्यै समर्प्य तेनैव देवीं नीराज्य स्वस्थाने स्थापयित्वा सपुष्पाभ्यां हस्ताभ्यां कृताञ्जलिर्देवीं ध्यायन्भगवति देवि गायत्रि क्षमस्वेति वदन्गणपत्यादिचतुरो देवान्देवीमूर्तौ विलीनान्विभाव्य देवीमूर्तिमपि तेजोरूपां विभावयेत् । ततः–

ॐ गच्छ गच्छ परं स्थानं स्वस्थाने परमेश्वरि ।
यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ॥

इत्यनेन संहारमुद्रया निर्माल्यमाकृष्याऽऽघ्राय तत्तेजस्तथैव सुषुम्नावर्त्मना स्वीयहृत्कमले विसर्जयेत् । ततो मूलेन प्राणायामत्रयं कृत्वा–

ॐ तिष्ठ देवि परे स्थाने स्वस्थाने परमेश्वरि ।
यत्र ब्रह्मादयो देवाः सर्वे तिष्ठन्ति मे हृदि ॥

तत ऋष्यादिकरषङ्गन्यासपूर्वकं हृदि मानसदेवीं पूजयित्वा तदात्मानभात्मानं भावयेत्। तत ऐशान्यां चतुरस्रषट्कोणवृत्तत्रिकोणात्मकं मण्डलं विधाय तस्य नैर्ऋत्ये गणेशनिर्माल्येन ॐ लम्बोदराय नमः। वायव्ये सूर्यनिर्माल्येन ॐ तेजश्चण्डाय नमः। ऐशान्ये विष्णुनिर्माल्येन ॐ विष्वक्सेनाय नमः। आग्नेये महेशनिर्माल्येन ॐ तेजश्चण्डीशाय नमः। इतस्तत्तदुच्छिष्टभुज पूजयेत्। ततः—

निर्माल्यं मस्तके धार्यं सर्वाङ्गे चानुलेपनम्।
नैवेद्यमुपभुञ्जीत दत्त्वा तद्भक्तिशालिने॥

इति विश्वामित्रसंहितावचनादवशिष्टचन्दनेन मूलाभिमन्त्रितेन पूर्वोक्तविधिना तिलकं कृत्वाऽर्घ्योदकं किंचित्प्राश्य—

निर्माल्यं तु शुचौ देशे धारणीयं सदैव हि।

तथा च वसिष्ठः—

पुष्पादिकं समाघ्राय शुचौ देशेऽप्सु वा क्षिपेत्।
देवतात्मा सुखं स्वच्छो विहरेद्देवताधिया॥

इति नित्यपूजाविधिः।

पुरश्चरणार्थी त्वित्थं नित्यं क्रमेण पूजां विधाय पूर्ववद्गुर्वादिकं ध्यात्वा गुरुमन्त्रदेवतात्मा नामभेदलक्षणं विभाव्य देवीरूपमात्मानं स्मरन्पुरश्चरणीयं जपमाचरेत्। तथा चोक्तं संहितात्रये—

गन्धाद्यैर्मानसैरिष्ट्वा षडङ्गन्यासपूर्वकम्।
ध्यात्वेष्टदेवतारूपमात्मानं प्रजपेन्मनुम्॥
शास्त्रदृष्टेन विधिना भक्तिमान्स्थिरमानसः।
संख्यापूर्तौ पुन कुर्याद्दध्यादिप्राणसंयमान्॥
लभतेऽभिमतां सिद्धिं चतुर्विंशतिलक्षतः।
जपतोऽयुतसंख्याकैरथवा च सहस्रकैः॥
उत्तमं मध्यमं प्रोक्तं कनिष्ठं च पुरश्चरम्।

लाघवे लाघवं कार्यं गौरवे गौरवं तथा ॥
यदि कश्चिद्द्विजश्रेष्ठः कृताचारो जितेन्द्रियः ।
तस्य सावित्र्यादिमन्त्राः फलन्त्येव न संशयः ॥
यस्मिंश्च निगदेनैव जपसंख्यां विधीयते ।
तत्र सर्वत्र मन्त्राणां संख्यावृद्धिर्युगक्रमात् ।
कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणा भवेत् ।
द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा ॥

इति वैशंपायनसंहितावचनात्षण्णवतिलक्षसंख्याकजपं पुरश्चरणमथवा तावत्संख्यमयुतानि सहस्राणि वा स्यादित्यवगम्यते । तच्च—

जपार्चापूर्वको होमस्तर्पणं चाभिषेचनम् ।
भूदेवभोजनं चैवंप्रकारैषा पुरस्क्रिया ॥
इति पञ्चाङ्गतः सिद्धिं मन्त्री शीघ्रमवाप्नुयात् ।
तेजस्वी ब्रह्मवर्चस्वी निग्रहानुग्रहक्षमः ॥
भवेदचिरकालेन सत्यं जानीहि पार्वति ।

इतीश्वरवाक्यम् । रुद्रयामले—

होमाशक्तौ जपं कुर्याद्धोमसंख्याचतुर्गुणम् ।
षड्गुणं चाष्टगुणितं यथासंख्यं द्विजायतः ॥
साङ्गतादि विना देवीजपहोमादि निष्फलम् ।
तस्मात्कुर्यात्प्रयत्नेन देवीपूजनमादरात् ॥

ब्रह्मसंहितायाम्—
अशक्त्वाद्युक्तहोमस्तु( स्य ) जपस्तद्द्विगुणो भवेत् । इति ।
तथा—

सुतीर्थे प्रजपेन्मन्त्रं पूर्वपापप्रशान्तये ।
शुद्धदेहाय मन्त्रोक्तस्ततः सिद्धिं प्रयच्छति ॥
नाध्यातोऽनार्चितो मन्त्रो गुरुभक्त्या प्रसीदति ।
नाजप्तः सिद्धिदानेच्छुर्नाहुतः फलदो भवेत् ॥

पूजां ध्यानं जपं होमं तथा कर्मचतुष्टयम् ।
प्रत्यहं साधकः कुर्यात्स्वयं चेत्सिद्धिमिच्छति ॥
जपस्यान्ते शिवं ध्यायेद्ध्यानस्यान्ते पुनर्जपेत् ।
जपध्यानसमायुक्तः शीघ्रं सिध्यति मन्त्रवित् ॥
कर्मणा प्रबलेनैव प्रतिबन्धे विरोधिना ।
यदि सिद्धिं न लभते द्विस्त्रिर्वा पुनराचरेत् ॥
दैवेनोपहतो नित्यमैहिकानि न कारयेत् ।
नापराधोऽस्त्यस्य किंचित्प्राप्नुयादुपहास्यताम् ॥
आमुष्मिकं फलं तस्य भविष्यति वरानने ।
ब्रह्मलोकमवाप्नोति ब्रह्मणा सह मोदते ॥
अथवा विष्णुलोकं च विष्णोः सायुज्यतां व्रजेत् ।
सूर्यस्य वा शिवस्यापि चन्द्रस्येन्द्रस्य वा पुनः ॥
यं यं काममभिध्यायीत तं तमाप्नोति निश्चितम् ।
गायत्रीमन्त्रजाप्येन सत्यं सत्यं न संशयः ॥
भैक्षादिनियताहारः सकृद्रात्रौ विधीयते ।
दिवा चैव जपं कुर्यात्पौरश्चरणिको द्विजः ।
पत्रावल्यां पलाशस्य मिताहारी भवेन्निशि ।
कुशैर्विनिर्मितायां तु शय्यायां वस्त्रमात्मनः ॥
सद्यः प्रक्षालितं दत्त्वा एकाकी निर्भयः स्वपेत् ।
एवं प्रतिदिनं कुर्यात्संख्या यावन्न पूर्यते ॥
तदन्ते महतीं पूजां कुर्याद्विप्रांश्च तर्पयेत् ।
गन्धमाल्याम्बरैश्चैव भक्ष्यभोज्यैः सदक्षिणैः ।
दीनान्धकृपणानार्तान्संतोष्य हृष्टमानसः ।
गोभूहिरण्यवस्त्राद्यैः संपूज्य गुरुमात्मनः ॥
मिष्टान्नं बन्धुभिः सार्धं भुञ्जीतोत्साहपूर्वकम् ।
महान्तमुत्सवं कुर्यात्तद्दिने साधकोत्तमः ॥

विधिनैवं जपं पूजां होपादींश्च समाचरेत् ।
विधिहीने फलाभावस्तदुक्तं शिवशासने ॥
निर्ऋतिर्विधिहीनानां फलं हन्ति च कर्मणाम् ।
निशाचराधिपत्यं हि कुरुते शंकराज्ञया ॥

इति संक्षेपः । अत्र पूजा त्रिविधोत्तममध्यमकनिष्ठभेदात् -

अग्निकार्येण हविषा भूषणश्च समन्वितम् ।
द्रव्यशुद्धिसमायुक्तमुत्तमं पूजनं स्मृतम् ॥
अग्निकार्यविहीनं तु कालदेशानुसारतः ।
उपचारैर्युतं द्रव्यैर्मध्यमं पूजनं स्मृतम् ॥
वस्त्रालंकारवस्तूनि वर्जयित्वा पृथग्विधम् ।
केवलं पुष्पयोगं तु कनिष्ठं पूजनं भवेत् ॥ इति ।
पूजां विस्तरतः कर्तुं यो न शक्नोति मानव ॥
यदि वाऽङ्गेन्द्रवज्राद्यैः पूजयेदिष्टदेवताम् ।
अथवा देवतामात्रं ध्यात्वा सम्यक् प्रपूजयेत् ॥
अथवा मानसीं कुर्यादात्मपूजामथापि वा ।
अथवा केवलां पूजां बाह्यां कुर्याद्विचक्षणः ॥
अर्चामात्रेऽप्यशक्तश्चेद्दद्यादर्चनसाधनम् ।
यो दातुं नातिशक्नोति कुर्यादर्चनदर्शनम् ॥
संपूज्यैवं जपं कुर्यान्न मन्त्रं केवलं जपेत् ।
पूर्वपूर्वस्य चाशक्तावुत्तरोत्तरमाचरेत् ॥
यद्येतदन्यथा कुर्यात्तदाऽनिष्टफलं स्मृतम् ।
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ॥
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ।
इति विज्ञाय सामर्थ्यमेकं पन्थानमाचरेत् ॥
नैकं च यस्य विद्येत सोऽधो याति न संशयः ।

इति कृतपुरश्चरणः कल्पोक्तप्रयोगाधिकारी भवति । वत्सरादर्वाक्सिद्धिर्जायते तदुक्तं शिवशासने—

एवं संपूजयन्मन्त्री जपहोमादितत्परः ।
ब्रह्मचर्यरतः शुद्धः शुद्धदन्तनखादिकः ॥
संस्मरन्सर्ववनिताः सततं देवताधिया ।
सर्वाभीष्टं लभेद्धीमान्मासैर्द्वादशभिर्ध्रुवम् ॥

सुविमलनखदन्तपाणिपादो मुदितमनाः परदूषणेषु मौनी ।
हरिहरकमलोद्भवादिभक्तो भवति च रमासरस्वतीनिवासः ॥

इति निगदितमेतद्ब्रह्मरुद्रादिदेवैः
सवितृमनुविधानं वेदतन्त्रोक्तमाद्यम् ।
सकलमपि च पूर्वैः कौशिकाद्यैः कृतं यत्
समभिमतफलं ते प्राप्नुयुः शीघ्रमेव ॥

वेदशास्त्रपुराणानामयमेव सुनिश्चयः ।
गायत्र्या जपहोमादिविधिः सर्वार्थसाधकः ॥

इति श्रीशंकराचार्यैर्भगवद्भिः प्रकाशिता ।
गायत्रीपद्धतिः शुद्धसंप्रदायाद्द्विजन्मनाम् ॥

हिताय ब्राह्मणानां च ब्रह्मचर्यसमृद्धये ।
लिखित्वा पूजयेदेनां सोऽपि सिद्धिमवाप्नुयात् ॥

इति श्रीमदाचार्यशंकरगुरुविरचिता सर्ववेदशास्त्रपुराणतन्त्र
संमता गायत्रीपद्धतिः समाप्ता ।

———

घारेइत्युपनामकशंकरसूरिविरचिता

# गायत्रीपुरश्चरणपद्धति

हेरम्बं प्रणिपत्य सद्गुणनिधिं बल्लालसंज्ञं ततं
नानाशास्त्रविचारणैकनिपुणं ज्ञानाब्धिपूर्णं गुरुम् ।
घारे इत्युपनामको वितनुते विद्वन्मुदे शंकरः
सावित्रीसरणिं पुमर्थफलदां कल्पानुतन्त्रानुगाम् ॥ १ ॥

तत्र तावत्सावित्रीशब्देन परदेवतोच्यते । तदुक्तं भारद्वाजीये सूते जगदादि सा सावित्री सर्वजगत्प्रसवादिकर्त्री । सैव गायत्रीत्युच्यते—गायन्तं जपादिकर्तारं त्रायत इति । सैव सेव्यत्वेन शब्दब्रह्मेत्युच्यते । उक्तं च नारायणोपनिषदि—गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे । इति । तथा भगवद्गीतासु च—गायत्री छन्दसामहामिति ।

अन्यत्र संग्रहे—

गायत्री परदेवतेति गदिता ब्रह्मैव चिद्रूपिणी । इति ।

गायत्रीजपाद्य फलमुक्तं वृद्धपराशरस्मृतौ—

गायत्रीजपकृद्भक्त्या सर्वपापैः प्रमुच्यते ।

भविष्ये—

सर्वपापानि नश्यन्ति गायत्रीजपतो नृप । इति ।

आग्नेये—

ऐहिकामुष्मिकं सर्वं गायत्रीजपतो भवेत् । इति ।

पाद्मे

ब्रह्महत्यादि पापानि गुरूणि च लघूनि च ।
नाशयत्यचिरेणैव गायत्रीजापको द्विजः ॥ इति ।

अथ गायत्रीपुरश्चरणप्रकारो लिख्यते तदुक्तं शारदातिलके—

अथो वक्ष्यामि गायत्रीं तत्त्वरूपां त्रयीमयीम् ।
यया प्रकाश्यते ब्रह्म सच्चिदानन्दलक्षणम् ॥ १ ॥

प्रणवाद्या व्याहृतयः सप्त स्युस्तत्पदादिका ।
चतुर्विंशत्यक्षरात्मा गायत्री शिरसाऽन्विता ॥ २ ॥
सर्ववेदोद्धृतः सारो मन्त्रोऽयं समुदाहृतः ।
ब्रह्मदेव्यादिगायत्री परमात्मा समीरिता ॥ ३ ॥
ऋष्याद्या प्रणवस्यैते मुनिभिः परिकीर्तिताः ।
जमदग्निभरद्वाजभृगुगौतमकश्यपान् ॥ ४ ॥
विश्वामित्रवशिष्ठाख्यान्व्याहृतीनामृषीन्विदुः ।
गायत्र्युष्णिगथानुष्टुब्बृहतीपङ्क्तयः पुनः ॥ ५ ॥
त्रिष्टुब्जगत्यौ छन्दांसि कथितानि महर्षिभिः ।
सप्तार्चिरनिलः सूर्यो वाक्पतिर्वरुणो वृषा ॥ ६ ॥
विश्वे देवाः क्रमादासां देवताः परिकीर्तिताः ।
गायत्र्या मुनिराम्नातो विश्वामित्रो महाद्युतिः ॥ ७ ॥
गायत्री छन्द इत्युक्तं दवता सविता स्मृता ।
शिरसोऽस्या मुनिर्ब्रह्मा छन्दो देव्यादिका स्मृता ॥ ८ ॥
गायत्री परमात्माऽस्या देवता कथिता बुधैः ।
व्याहृतीः सप्त ताराद्या हृन्मुखांसो युग्मके ॥ ९ ॥
जठरे न्यस्य मन्त्रज्ञो गायत्र्यर्णास्तनौ न्यसेत् ।
षट्संधिषु ध्वजे नाभौ हृत्कण्ठभुजसंधिषु ॥ १० ॥
आस्यनासाकपोलाक्षिकर्णभ्रूमस्तके पुनः ।
पाश्चात्त्यौत्तरयाम्यप्रागूर्ध्ववक्त्रेषु साधक ॥ ११ ॥
पदानि दश विन्यस्येदेषु स्थानेषु मन्त्रवित् ।
शिरोभ्रूमध्यदृग्वक्त्रकण्ठहृन्नाभिगुह्यके ॥ १२ ॥
जानुनोः पादयोर्युग्मे तच्छिरः शिरसि न्यसेत् ।
ब्रह्मणे हृदयं प्रोक्तं विष्णवे शिर ईरितम् ॥ १३ ॥
शिखा रुद्राय कवचमीश्वराय समीरितम् ।
नेत्रं सदाशिवायोक्तमस्त्रं सर्वात्मने स्मृतम् ॥ १४ ॥

षडङ्गान्येवमुक्तानि यथास्थानं प्रविन्यसेत् ।
प्राणायामान्पुरा कृत्वा गायत्रीं संध्ययोर्जपेत् ॥ १५ ॥
सप्तव्याहृतिसंयुक्तां गायत्रीं शिरसाऽन्विताम् ।
त्रिरुच्चरन्धिया प्राणान्धारयेद्यतमानसः ॥ १६ ॥
प्राणायामो यमाख्यातः समस्तदुरितापहः ।
व्याहृतित्रयसं[illegible]ां गायत्रीं दीक्षितो जपेत् ॥ १७ ॥
तत्त्वलक्षं विधानेन भिक्षाशी विजितेन्द्रियः ।
क्षीरोदनतिलान्दूर्वाः क्षी[illegible]द्रुमस[illegible]मे[illegible]रान् ॥ १८ ॥
पृथक्सहस्रत्रितयं जुहुया[illegible]न्मन्त्रसिद्धये ।
वि[illegible]ाय मण्डलं विद्वांस्त्रिकोणोज्ज्वलकार्णिकम् ॥ १९ ॥
सौरं पीठं यजेदत्र दीप्तादिनवशक्तिभिः ।
मूलमन्त्रेण क्लृप्तायां मूर्तौ देवीं विचिन्तयेत् ॥ २० ॥
काणेषु त्रिषु संपूज्या ब्रह्माद्याः शक्तयो बहिः ।
आदित्याद्यास्ततः पूज्या उषादिसहिताः क्रमात् ॥ [illegible]१ ॥
ततः षडङ्गानभ्यर्चेत्केसरेषु यथाविधि ।
ह्लादिनीं प्रभां पश्चान्नित्या विश्वंभरां पुनः ॥ २२ ॥
विलासिनीप्रभावत्यौ जयां शान्तां यजेत्पुनः ।
कान्तिं दुर्गासरस्वत्यौ विद्यारूपा ततः परम् ॥ २३ ॥
विशालसंहितामीशां व्यापिनीं विमलां यजेत् ।
तमोपहारिणीं सूक्ष्मां विश्वयोनिं जयावहाम् ॥ २४ ॥
पद्मालयां परां शोभां पद्मरूपां ततोऽर्चयेत् ।
ब्राह्म्याद्याः सारुणा बाह्ये पूजयेत्प्रोक्तलक्षणाः ॥ २५ ॥
ततोऽभ्यर्चद्ग्रहान्बाह्ये शक्राद्यानायुधैः सह ।
इत्थमावरणैर्देवीं दशभिः परिपूजयेत् ॥ २६ ॥
धर्मार्थकाममोक्षाणां भोक्ता स्याद्द्विजसत्तमः ।
तत्त्वसंख्यासहस्राणि मन्त्रविज्जुहुयात्तिलैः ॥ २७ ॥

सर्वपापविनिर्मुक्तो दीर्घमायुः स विन्दति ।
आयुषे साज्यहविषा केवलेनाथ सर्पिषा ॥ २८ ॥
दूर्वात्रिकैस्तिलैर्मन्त्री जुहुयात्त्रिसहस्रकम् ।
अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादयुतं ततः ॥ २९ ॥
महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः ।
ब्रह्मश्रिये प्रजुहुयात्प्रसूनैर्ब्रह्मवृक्षजैः ॥ ३० ॥
बहुना किमिहोक्तेन यथावत्साधु साधिता ।
द्विजन्मनामियं विद्या सिद्धा कामदुधा मता ॥ ३१ ॥ इति ।

तन्त्रान्तरे तु द्वात्रिंशल्लक्षात्मकं पुरश्चरणमुक्तम् । पारिजातोदाहृते क्वचि-
तु त्रिलक्षात्मकपुरश्चरणमुक्तम्—

अथ वेदादिगीतायाः प्रसादजननं विधिम् ।
गायत्र्याः संप्रवक्ष्यामि धर्मकामार्थमोक्षदम् ॥
मध्याह्ने मितभुङ्मौनी त्रि. स्नानार्चनतत्परः ।
जपल्लक्षत्रयं धीमान्परं सायुज्यमश्नुते ॥ इति ।

कलौ तूक्तसंख्याचतुर्गुणो जपो विहितः—कलौ चतुर्गुणं प्रोक्तम् । इति
त् ।

प्रपञ्चसारे तु—

भूयस्त्वक्षरलक्षं गायत्रीं संयतात्मको जप्त्वा ।
जुहुयात्पायसातिलघृतदूर्वाभिर्दुग्धतरुसामिद्भिरपि ॥ १ ॥
एकैकं त्रिसहस्रं मन्त्री समभीष्टसिद्धये मुक्त्यै ।
अक्षरसहस्रसंख्यं मुख्यतरैः केवलैस्तिलैर्जुहुयात् ॥ २ ॥
दुरितच्छेदनविषये दीर्घायुषे च विशदमतिः ।
आयुष्कामो जुहुयात्पायसहविराज्यकेवलाज्यैश्च ॥ ३ ॥
दूर्वाभिः सतिलाभिः सर्वैस्त्रिसहस्रसंख्याकम् ।
अथ त्रिमधुसहितैररुणैर्जुहुयात्सरोरुहैरयुतम् ॥ ४ ॥

नष्टश्रीरपि भूयो भवति मनोज्ञो मन्दिरं लक्ष्म्याः ।
अन्नाद्यर्थं तैरपि पालाशैर्ब्रह्मवर्चसे जुहुयात् ॥ ५ ॥
सर्वैरेतैर्जुहुयात्सर्वफलाप्त्यै द्विजेश्वरो मतिमान् ॥ इति ।

अक्षरसमसंख्यानि लक्षाणि यस्यां क्रियायां चतुर्विंशतिरिति यावत् । घृततिलात्मकमेकं हविः । मुक्त्या इत्यारभ्य दीर्घायुषे चेत्यन्तमेकं वाक्यम् । विशदमतिरिति ध्यानमृत्युंजयजपाभ्यां शुद्धचित्त इत्यर्थः । हविराज्यात्मकमेकं हविः । हविरोदनः । अन्नाद्यर्थमपीति भिन्नक्रमः । तथा शिवरामकृतसावित्री प्रकाशिकायां त्वेवं चतुर्विंशतिलक्षं जपित्वा गव्यदुग्धौदनातिलदूर्वाश्वत्थोदुम्बरप्लक्षवटसमिदाख्यद्रव्याष्टकेन प्रतिद्रव्यं त्रिसहस्रमिति चतुर्विंशतिसहस्रहोमः । नात्र दशांशानुरोधो विशिष्टशास्त्रार्थवाद एव न तर्पणादिकमपि । भक्ष्यं पयो हविर्वा । पुरश्चरणजपे व्याहृतित्रययुक्तां गायत्रीं गुरूक्त्युक्त्या जपेदुभयोर्वीर्यविवर्धकत्वेन समानार्थकत्वात् । सप्तव्याहृतिशिरोयुक्तां प्राणायामे जपेत्तद्वाच्यावधिकतादात्म्यसापेक्षत्वात् । नित्यजपादौ तु प्रणवमुच्चार्य पश्चादिष्टसंख्यं केवलमेव जपेत्स्वातन्त्र्येण परतत्त्वार्थवाचकत्वन ब्रह्मविद्यात्वात् । पूर्वोक्तप्रकारेण कृतपुरश्चरणस्तिलतण्डुलैश्चतुर्विंशतिसहस्रं हुत्वा पापमुक्तो भवति । द्रव्यादितत्तत्कामनया होमसंख्याष्टद्रव्यसंख्याविशेषो द्रष्टव्यस्तथाऽऽस्याः सावित्र्यास्तत्त्वात्मकत्वेन मन्त्रचतुर्विंशतितत्त्वात्मकत्वं युक्तं तेन च तत्तत्त्वन्यास एव युक्तः सूर्यवाचकत्वात्तत्पीठस्थितत्वाच्चेति दिक् । अथ प्राणायामजपादावर्थविभावनापूर्वकं सावित्री जपोऽभिहितोऽतस्तस्या अर्थो लिख्यते । " योऽर्थज्ञ इत्सकलं भद्रमश्नुते " इति वचनात् । गायन्तं त्रायते यस्माद्गायत्री । तदिति द्वितीयैकवचनमखिलजगदुत्पत्तिस्थितिलयकारणहेतुभूतम् । सवितुरिति षष्ठ्येकवचनं षुञ् प्राणिप्रसव इत्यस्य रूपं सर्वप्राणिमात्रस्य प्रसवितुः । वरेण्यं प्रार्थनीयमकल्मषैः सततं ध्येयमित्यर्थः । भर्गः भ्रस्जि भर्जन इत्येतस्य रूपं भजतां पापभर्जने हेतुभूतमित्यर्थः भ्राजृदीप्ताविति त्यस्य वा भर्गस्तेज इत्यर्थः देवस्येति दिवु क्रीडायामित्येतस्य रूपं दीव्यतेः क्रीडनत्वादिसकलार्थत्वात् । धीमहि ध्यै चिन्तायामित्यस्य रूपं योऽसावादित्यः पुरुषः सोऽसावहं( इति ) चिन्तयामः । धियः द्वितीयाबहुवचनम् । यः, छान्दस-

त्वाल्लिङ्गव्यत्ययः । यत्तेजः सूर्यमण्डलाभिधेयं वरेण्यं श्रेष्ठं भर्गो नोऽस्माकं बुद्धीश्चिरन्तनसंसारमारभ्यैतावत्कालपर्यन्तं संसारपारम्पर्यप्रारम्भानुकूलवचनतया श्रेयस्करेषु कर्मसु प्रचोदयात् । चुद प्रेरण इत्यस्य प्रकर्षेण चोदयामासेति भारद्वाजीयधर्मशास्त्रे व्याख्यास्मृतौ व्याख्यातम् । अथ पुरश्चरणयोगि किंचिल्लिख्यते तत्र स्थलदेशकालान्नमन्त्रात्मादिशुद्धिपूर्वकं सर्वमाचरेदित्युक्तम् । तत्र शुद्धस्थलाद्युक्तं वसिष्ठसंहितायाम्—

पर्वताग्रे नदीतीरे बिल्वमूले जलाशये ।
गोष्ठे देवालयेऽश्वत्थ उद्याने तुलसीवने ॥ १ ॥
पुण्यक्षेत्रे गुरोः पार्श्वे चित्तैकाग्रस्थलेऽपि च ।
पुरश्चरणकृन्मन्त्री सिध्यते च न संशयः ॥ २ ॥
काशीपुरी च केदारो महाकालोऽथ नासिकम् ।
त्र्यम्बकं च महाक्षेत्रं पञ्च द्वीपा इमे भुवि ॥ ३ ॥
ज्येष्ठाषाढौ भाद्रपदं पौषं तु मलमासकम् ।
गुरुभार्गवमौढ्यादि वर्जयेच्च प्रयत्नतः ॥ ४ ॥
अङ्गारशनिचारौ च व्यतीपातं च वैधृतिम् ।
अष्टमीं नवमीं षष्ठीं चतुर्थीं च त्रयोदशीम् ॥ ५ ॥
चतुर्दशीममावस्यां प्रदोषं च तथा निशाम् ।
यमाग्निरुद्रसार्पेन्द्रवसुश्रवणजन्मभम् ॥ ६ ॥
मेषकर्कतुलाकुम्भमकरालिकलग्नकम् ।
सर्वाण्येतानि वर्ज्यानि पुरश्चरणकर्मणि ॥ ७ ॥
चन्द्रतारानुकूले च शुक्लपक्षे विशेषतः ।
पुरश्चरणकं कुर्यान्मन्त्रसिद्धिः प्रजायते ॥ ८ ॥
स्वस्तिवाचनकं कुर्यान्नान्दीश्राद्धं यथाविधि ।
विप्रान्संतर्प्य यत्नेन भोजनाच्छादनादिभिः ॥ ९ ॥
आरभेत ततः पश्चाद्विप्रानुज्ञां प्रगृह्य च ।
अयाचितोञ्छौ शुक्लं च भिक्षावृत्तिचतुष्टयम् ॥ १० ॥

तान्त्रिकैर्वैदिकैश्चैव अन्नशुद्धिः प्रकीर्तिता ।
यस्य कस्यापि मन्त्रस्य पुरश्चरणमारभेत् ॥ ११ ॥
पञ्चप्रणवसंयुक्तां गायत्रीं त्र्ययुतं जपेत् ।
आदौ मन्त्रविशुद्ध्यर्थमिति ।
स्त्रीशूद्रपतितानां च मन्त्रं श्रुत्वा यथाविधि ॥
अतः कारणाद्द्विजेन्द्र मन्त्रशोधनमुत्तमम् ।
दशप्रणवसंयुक्तां गायत्रीं चायुतं जपेत् ॥
देहशुद्धिर्भवेत्तेनेति ।
तपसा शोधयेद्देहं कृच्छ्रचान्द्रायणादिभिः ।

अथवा पञ्चदशप्रणवसंयुक्तां गायत्रीं पञ्चदशसहस्रमितां जपेत् ॥

पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च ।
होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥
आत्मत्वशोधनार्थाय लक्षत्रयं जपेद्बुधः ।
अथवाऽप्यष्टलक्षं तु श्रुति( ते ) नोक्तेन पूर्वकम् ॥
चतुर्विंशतिलक्षं तु यज्ञकल्पगतं यथा ।
प्रारम्भदिनमारभ्य समाप्तिदिवसावधि ॥
न न्यूनं नातिरिक्तं च जपं कुर्याद्दिने दिने ।
क्षीराहारी फलाशी वा शाकाशी वा हविष्यभुक् ॥
भिक्षाशी वा जपेद्यद्वा कृच्छ्रचान्द्रायणादिकृत् ।
भूशय्या ब्रह्मचारित्वं मौनचर्या तथैव च ॥
नित्यं त्रिषवणं स्नानं क्षुद्रकर्मविवर्जनम् ।
नित्यपूजा नित्यदानमानन्दस्तुतिकीर्तनम् ॥
नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ।
जपो निष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः ॥ तथा—
तत्र सर्वत्र मन्त्राणां संख्यावृद्धिर्युगक्रमात् ।
कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणा भवेत् ॥

द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा ।

इति वैशंपायनसंहितावचनात् ।

लभतेऽभिमतां सिद्धिं चतुर्विंशतिलक्षतः ।
जपतोऽयुतसंख्याकैरथवा च सहस्रकैः ॥ इति ।

षण्णवतिलक्षसंख्याजपं कलौ पुरश्चरणम् । अथवा तावत्संख्यमयुतानि सहस्राणि वेत्यवगम्यते ।

होमाशक्तौ जपं कुर्याद्धोमसंख्याचतुर्गुणम् ।
षड्गुणं चाष्टगुणितं यथासंख्यं द्विजातयः ॥

अत्र विहितानिषिद्धादिकं ग्रन्थान्तरादवगन्तव्यं विस्तरभयान्नेह लिख्यत इति दिक् । अथ वक्ष्यमाणन्यासादिषु मुद्राणां प्रयोजनत्वाल्लक्षणपुरःसरं मुद्रा लिख्यन्ते । तदुक्तं वसिष्ठसंहितायाम्—

मुदं ददाति देवानां द्रावयत्यसुरांस्तथा ।
मोदनाद्द्रावणाच्चैव मुद्रेति परिकीर्तिता ॥

इति वचनान्मुद्रादर्शनमावश्यकम् ।

अथातो दर्शयेन्मुद्राः सुमुखं संपुटं तथा ।
ततो विततविस्तीर्णे द्विमुखं त्रिमुखं ततः ॥
चतुर्मुखं पञ्चमुखं षण्मुखाधोमुखे ततः ।
व्यापकाञ्जलिकाख्यं च शकटं तदनन्तरम् ॥
यमपाशं तु ग्रथितं ततः स्यात्संमुखोन्मुखम् ।
प्रलम्बो मुष्टिको मीनस्ततः कूर्मवराहकौ ॥
सिंहाक्रान्तं महाक्रान्तं ततो मुद्गरपल्लवौ ।
एता मुद्राश्चतुर्विंशद्गायत्र्याः सुप्रतिष्ठिताः ॥

एतल्लक्षणमाह—

सुमुखं संहतौ हस्तावुत्तानौ कुञ्चिताङ्गुली ।
संपुटं पद्मकोणाभौ करावन्योन्यसंहतौ ।
विततं संहतौ हस्तावुत्तानावायताङ्गुली ।

विस्तीर्ण संहतौ पाणी मिथो मुक्ताङ्गुली द्वयोः ॥
संमुखं सक्तयोः पाण्योः कनिष्ठाद्वययोगतः ।
शेषाङ्गुलीनां वैकल्ये द्विमुखत्रिमुखादयः ॥
तिर्यक्संयुज्यमानाग्रौ संयुक्ताङ्गुलिमण्डलौ ।
हस्तौ षण्मुखमित्युक्ता मुद्रा मुद्राविशारदैः ॥
आकुञ्चिताग्रौ संयुक्तौ न्युब्जौ हस्तावधोमुखम् ।
उत्तानौ तादृशावेव व्यापकं कुञ्चितौ करौ ॥
अधोमुखौ बद्धमुष्टी मुक्ताग्राङ्गुष्ठको करौ ।
शकटं नाम कथितं यमपाशमतः परम् ॥
बद्धमुष्टिकयोः पाण्योरुत्ताना वामतर्जनी ।
कुञ्चिताग्राऽन्यथा युक्ता तर्जन्याऽनृजुवक्त्रया ॥
उत्तानसंधिसंलीनबद्धाङ्गुलिद्वयौ करौ ।
संमुखाघटितौ दीर्घाङ्गुष्ठौ ग्र[illegible]तमुच्यते ॥
ऊर्ध्वाङ्गुलिर्वामहस्तस्तादृशा दक्षिणेन तु ।
अधोमुखेन संयुक्तः संमुखोन्मुखमुच्यते ॥
उत्तानोत्तानकोटी च प्रलम्बः कथितः करौ ।
मुष्टी चान्योन्यसंयुक्तावुत्तानौ मुष्टिको भवेत् ॥
मीनस्तु संमुखीभूतौ मुक्तानामकनिष्ठिकौ ।
ऊर्ध्वसंयुक्तवक्त्रौ तु शेषाङ्गुलिदलौ करौ ॥
अधोमुखः करो वामस्तादृशा दक्षिणेन तु ।
पृष्ठदेशे समाक्रान्तः कूर्मो नामाभिधीयते ॥
ऊर्ध्वमध्यं वामभुजः कक्षायामाश्रयेत्क्रमम् ।
वराहो नाम मुद्रेयं कथिता मुनिसत्तमैः ॥
कण्ठाश्रितौ करौ कर्णसंश्रितावायताङ्गुली ।
सिंहाक्रान्तं नाम मुद्रा महाक्रान्तं च कथ्यते ॥
किंचिदाकुञ्चिताग्रौ च हस्तौ कुत्व तथा भवेत् ।

ऊर्ध्वं किंचिद्गतौ पाणी मुद्गरो वामतर्जनी ॥
ग्रस्ता दक्षिणहस्तेन मुद्रा प्रोक्ता मनीषिभिः ।
अधोमुखः स्थितो मूर्ध्नि पल्लवो दक्षिणः करः ॥
मुद्राणां लक्षणं प्रोक्तं वसिष्ठाद्यैर्मुनीश्वरैः ॥ इति ।
एता मुद्रा न जानाति तस्य देवी न सिध्यति ।

अथ मालिन्यादिमुद्रालक्षणानि विश्वामित्रसंहितायाम्-

करद्वयाङ्गुष्ठतर्जन्यग्रसंयोगे मालिनीमुद्रा । करद्वयस्य पृष्ठे संयोज्य कनिष्ठिकाभ्यामवष्टभ्याधोऽङ्गुष्ठौ पुरस्तर्जन्यो संयोज्य मध्यमानामिकयोर्वक्रयोः पक्षतुल्यत्वेन गरुडमुद्रा ।

सर्वाङ्गुल्यः समाकुञ्च्य वामहस्तस्य तर्जनीम् ।
प्रगृह्य साधकेन्द्रस्तु दक्षिणेन तु मुष्टिना ॥
प्रसार्य तर्जनीं तस्य ईषदग्रे विकुञ्चयेत् ।
अङ्कुशा तु इत्थं मुद्रा वश्यकर्मविधौ मता ॥
विज्ञेयाङ्कुशमुद्रैव तर्जनी चेत्प्रसारिता ।
मुद्रोद्भवाख्या सर्वत्र स्थापने शस्यते बुधैः ।
पद्माकरौ करौ कृत्वा अङ्गुष्ठौ योजयेदुभौ ।
वाममध्यानाभिकयोर्युग्मेनेतरमध्यया ॥
संयोज्याङ्गुलयः शेषाः सरला ज्वालिनी भवेत् ।
हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः ॥
अङ्गुष्ठौ निक्षिपेदुच्छ्रौ मुद्रैषाऽऽवाहनी स्मृता ।
अधोमुखी त्वियं चेत्स्यात्स्थापनी मुद्रिका भवेत् ॥
उच्छ्रिताऽङ्गुष्ठमुष्ट्योस्तु संयोगात्संनिधापनी ।
अन्तःप्रवेशिताङ्गुष्ठा सेव सरोधनी मता ॥
अङ्गुष्ठतर्ज्यन्यग्रं तु मीलितं स्वहृदि स्थितम् ।
स्थानमुद्रा भवेदेवं............
वामाङ्गुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना ।

कृत्वोत्तानं ततो मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥
वामाङ्गुल्यस्तथाऽऽश्लिष्टाः संयुक्ताः स्युः प्रसारिताः
दक्षिणाङ्गुष्ठके लग्ना मुद्रा शङ्खस्य भूतिदा ॥
अङ्गुष्ठौ द्वौ तु संयुक्तौ कनिष्ठामूलसंस्थितौ ।
योनिमुद्रा तु विज्ञेया सर्वकामार्थदायिनी ॥
वामाङ्गुलीनां मध्ये तु अङ्गुष्ठं त्वथ दक्षिणम् ।
नियोज्य तर्जनीं दक्षां मध्यया वामतर्जनीम् ॥

विनियोजयेत् ! )

वामयाऽनामया दक्षां कनिष्ठां च नियोजयेत् ।
दक्षया नामया वामां कनिष्ठां च नियोजयेत् ॥
ततस्त्वधामुखाः कुर्याद्धेनुमुद्रा प्रकीर्तिता ।
तर्जनीभ्रमणे ैव अवगुण्ठनमीरितम् ॥
हस्तौ तु संमुखौ कृत्वा संलग्नौ तु प्रसारितौ ।
कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रा चक्रस्य सिद्धिदा ॥
होमे मुद्राः स्मृतास्तिस्रो मृगी हंसी च सूकरी
मुद्रां विना कृतो होमः सर्वो भवति निष्फलः ॥
सूकरी करसंकोची हंसी मुक्तकानिष्ठिका ।
कनिष्ठा तर्जनी मुक्ता मृगी मुद्रा प्रकीर्तिता ॥

अथ प्रकारान्तरेण मुद्राः-- अनामिकाद्वयमूलार्पिताङ्गुष्ठद्वयकोर्ध्वाञ्जल्यधःकरणरूपा, आवाहनी मुद्रा । सैवाधोमुखरूपा संस्थापनी । उच्छ्रिताङ्गुष्ठमुष्टिद्वयसंयोगरूपा संनिधापनी । सैवान्तरङ्गुष्ठा संनिरोधनी । उत्तानमुष्टियुगलरूपा संमुखी परितोभ्रामिताधोमुखतर्जन्येकवामकरमुष्टिरूपाऽवगुण्ठनी । धेनुमुद्रैवामृती मुद्रा ।

अन्योन्याङ्गुष्ठसंलग्नविस्तारितकरद्वया ।
महामुद्रेयमाख्याता न्यूनाधिकसमापनी ॥ इति मुद्रालक्षणानि ।

अथ गायत्रीपुरश्चरणं चिकीर्षुर्निश्चितगायत्रीपुरश्चरणप्रारम्भदिनात्पूर्वं कस्यांचिद्रिक्तायां तिथौ स्वपापक्षयपूर्वकमात्मशुद्धयर्थं प्रायश्चित्तं कुर्यात्। तद्यथा नद्यादौ कृतस्नानो यजमानश्चतुरस्त्रीनेकं वाऽध्यात्मविदः पर्षत्त्वेनोपवेश्य पर्षदं प्रदक्षिणीकृत्य साष्टाङ्गं प्रणमेत्। ततस्तैः किं ते कार्यं मिथ्या मा वादीः सत्यमेव वदेत्यादि पृष्टे पर्षदग्रे गोवृषयोः प्रत्येकं प्रत्याम्नायत्वेन यथाशक्ति सुवर्णरूप्ययोर्निष्कं तदर्धं वा निधायामुकशर्मणो मम जन्मप्रभृत्यद्य यावज्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकलघुपातकसंकलीकरणमलिनीकरणापात्रीकरणजातिभ्रंशीकरणप्रकीर्णकपातकाना निरासार्थमनुग्रहं कृत्वा प्रायश्चित्तमुपदिशन्तु भवन्तः। तथा–

सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः।
मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः॥ १॥
मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम्।
प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छत॥ २॥
पूज्यैः कृतपवित्रोऽहं भवेयं द्विजसत्तमैः।

एवं प्रार्थयेत्। प्रार्थनानन्तरं मामनुगृह्णन्तु भवन्त इति प्रणमेत्। ततस्ते तस्य शरीरद्रव्यादिशक्तिं विचार्य पुस्तकवाचनपूर्वकं कथयेयुः। अनुवादकस्याग्रे प्रत्याम्नायांश्च शक्त्या कल्पयेयुः। अस्मिन्काले प्रायश्चित्ती चन्दनपुष्पादिभिः पुस्तकपूजां सभ्यानुवादकपूजां च विधाय निबन्धपूजात्वेन किंचिद्यथाशक्ति द्रव्यं निधाय कृताञ्जलिपुटो नम्रस्तिष्ठेत्। अनुवादकाय च पापानुसारेण भूतिरूप दक्षिणां दद्यात्। ततोऽनुवादकः पूर्वोक्तानां महापातकव्यतिरिक्तानां पातकानक्षयोऽनेन पर्षदुपदिष्टेन सर्वप्रायश्चित्तेनामुकप्रत्याम्नायद्वारा प्राच्योदीच्याङ्गसहितेनाऽऽचीर्णेन तव शुद्धिर्भविष्यति तेन त्वं कृतार्थो भविष्यसीत्युपदिशेत्। तच्च प्रायश्चित्तं शक्त्यनुसारेण षडब्दं त्र्यब्दं सार्धाब्दं वा पर्षदनुमतम्। प्रत्याम्नायाश्च गायत्र्ययुतजपे तिलहोमे सहस्रे द्वादशब्राह्मणभोजने तीर्थयोजनयात्रायामेकगोदाने

सुवर्णरूप्यनिष्कतदर्धतदर्धानां गोमूल्यानां शक्त्या दाने शुष्ककोशस्य द्वादशस्नानेषु द्विगुणद्वादशमान्नदानादौ चैकः प्राजापत्य इति । तत्र शक्तस्याऽऽमान्नं द्विगुणं द्रव्यं चतुर्गुणमित्यादि योज्यम् । निष्कश्च लोकशास्त्रैकवाक्यतायां माषाश्चत्वारिंशद्विंशतिर्दश वा मुख्यं सुवर्णं तदशक्तौ रजतं ग्राह्यम् । ततो निवेदितं प्रायश्चितं भवदनुग्रह इत्यङ्गीकृत्य सन्मानपूर्वकं प्रणम्य पर्षदं विसर्जयेत् । अस्मिन्नहनि शक्तेनोपवासः कार्य इतरेण हविष्याशनम् । तत आचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकशर्मणो मम जन्मप्रभृत्यद्ययावज्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकोपपातकलघुपातकसंकलीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानां निरासेन श्रीपरमेश्वरप्रीत्यर्थममुकप्रायश्चित्तममुकप्रत्याम्नायेन प्राच्योदीच्याङ्गसहितं यथाशक्ति करिष्य इति संकल्प्य--

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥

इति मन्त्रेण शिखाकक्षोपस्थवर्जं नखरोमाणि वापयित्वा प्राङ्मुखो द्वादशाङ्गुलदन्तकाष्ठेन--

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

इति मन्त्रेण दन्तान्संशोध्य स्नात्वा भस्मादिस्नानानि कुर्यात् । तत्र भस्मस्नानम्--ईशानाय नम इति शिरसि । तत्पुरुषाय नम इति मुखे । अघोराय नम इति हृदये । वामदेवाय नम इति गुह्ये । सद्योजाताय नम इति पादयोः । प्रणवेन सर्वाङ्गे । यद्वा--अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्मेति मन्त्रैः । एवं भस्मना स्नात्वा गन्धद्वारामिति गोमयेन स्नायात् । यद्वा--

अग्रमग्रं चरन्तीनामोषधीनां वने वने ।
तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥

तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदा ।

इति मन्त्रेण गोमयस्नानम् ।

अथ मृत्तिकास्नानम् । बळित्था पर्वतानामिति भूमिं प्रार्थ्य मा यो रिषत्खनितेति खनित्वा स्योना पृथिवीति मृदमादाय आयने ते परायणे इति दूर्वामादाय गायत्र्याऽभ्युक्ष्य भूमौ मृदं निधायाऽऽचम्य देशकालादि स्मृत्वा मृत्स्नानमहं करिष्य इति संकल्प्य मृदं कुशोदकेनाभ्युक्षेत् । ततो दिक्षु मृदं क्षिपेत् । त्रातारमिन्द्रमिति पूर्वस्याम् । यमाय सोममिति दक्षिणतः । तत्त्वा यामीति पश्चिमतः । वयं सोमेत्युत्तरतः । स्योना पृथिवीत्यधः । तत्सूमित्युपरिष्टात् । ततोऽङ्गेषु सहस्रशीर्षेति शिरसि । अक्षीभ्यां त इति मुखे । ग्रीवाभ्यस्त इति ग्रीवायाम् । आन्त्रेभ्यस्त इति हृदये । नाभानाभिं न इति नाभौ । त्वमिन्द्र सजोषसमिति बाह्वोः । सोमानं स्वरणमिति कक्ष्योः । य कुक्षिरिति कुक्ष्योः । बह्वीनां पितेति पृष्ठे । ऊरुभ्यामित्यूर्वोः महनाद्वनमिति जान्वोः । एतावानस्येति पादयोः । यस्य विश्वानीति हस्तयोः । अङ्गादङ्गादित्यनेन पुरुषसूक्तेन च सर्वाङ्गोद्वर्तनम् एतावदशक्तावश्वक्रान्त इत्यादिभिरङ्गोद्वर्तनम । ततोऽश्वक्रान्ते इत्येवमादिभिः सतिलां सदूर्वां मृदं शिरसि निधाय मृत्तिकायाः स्थानं प्रक्षाल्य तीर्थं प्रार्थयेत् । हिरण्यशृङ्गं वरुणं० यन्मे मनसा वाचा० इदं तेऽन्याभिर्गंशगागङ्गेतिमन्त्रैः, सुमित्रिया न आप ओष० समुद्रज्येष्ठा इति चतसृभिरेतोन्वि-न्द्रामिति तिसृभिस्तरत्समन्दीति सूक्तेन, पावमानाभिरपो हि ष्ठेति तृचेन ( च ) मार्जनं कृत्वा इमं मे गङ्गे इत्युदकमालोड्य ऋतं चेति तृचं जपन्नघमर्षणं कुर्यात् । ततः प्रवाहाभिमुखस्त्रिवारं निमज्जेदिति मृत्तिकास्नानम् । तत आपो हि ष्ठेति तृचेन शुद्धोदकस्नानं कुर्यात् ।

अथ पञ्चगव्यस्नानानि । गायत्र्या गोमूत्रेण, गन्धद्वारेति गोमयेन, आप्यायस्वेति क्षीरेण, दधिक्राव्ण इति दध्ना, घृतं मिमिक्ष इति घृतेन, देवस्य त्वेति कुशोदकेन ( च ) स्नानं कुर्यात् । देवस्य त्वेति मन्त्रेऽभिषिञ्चामीति वाक्यशेषः । एवं दश स्नानानि विधाय स्नानाङ्गतर्पणं कृत्वा धौतवाससी परिधाय

द्विराचम्य विष्णूद्देशेन त्रिभ्योऽधिकान्युग्मान्ब्राह्मणान्पूजापूर्वकं भोजयेदामान्नं वा दद्यात् । इदमेव प्रायश्चित्ताङ्गभूतं विष्णुश्राद्धमित्यभिधीयते । ततः

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥

इति मन्त्रेण यज्ञसाधनभूताया इत्यनेन च गोदानं प्रत्यक्षं निष्क्रयद्वारा वा कुर्यात् । ततोऽग्निस्थापनपूर्वकमाज्येन व्याहृतिभिः पापापहमहाविष्णूद्देशेनाष्टोत्तरशतमष्टाविंशतिं वाऽऽज्याहुतीर्जुहुयात् । ततः पञ्चगव्यं कार्यम् । सुवर्णादिपात्रे पद्मादिपात्रे वा ताम्राया गोमूत्रं निपलं गायत्र्या प्रणवेन वाऽऽदाय तनोऽङ्गुष्ठाग्रपरीमितं गोमयं गन्धद्वारामिति मन्त्रेणाऽऽदाय ततः कपिलायाः पयः सप्तपलमाप्यायस्वेत्यादाय ततो नीलाया दधि सप्तपलं दधिक्राव्ण इत्यादाय ततः कृष्णाया घृतमेकपलं घृतं मिमिक्ष इत्यादाय तत एकपलं कुशोदकमापो हि ष्ठेत्यादाय प्रणवेनाऽऽलोड्य प्रणवेन यज्ञकाष्ठेन निर्मथ्य प्रणवेनाभिमन्त्र्य सप्तपत्रैर्हरितैः कुशैर्दशाऽऽहुतीर्जुहुयात् । मन्त्राश्च इरावती धेनुमती० पृथिव्या इदं० इदं विष्णु० विष्णव इदं० विष्णोर्नुकं० विष्णव इदं मा नस्तोके० रुद्रायेदं० ब्रह्मजज्ञानं० ब्रह्मण इदं० अग्नये स्वाहा अग्नय इदं० सोमाय० सोमायेदं० गायत्र्या सूर्याय० सूर्यायेदं० प्रणवेन प्रजापतये० भूर्भुवःस्व स्वाहा प्रजापतय इदं० अग्नये स्विष्टकृते० अग्नये स्विष्टकृत इदं० इति हुत्वा व्रतग्रहणं करिष्य इति द्विजान्पृष्ट्वा तैः कुरुष्वेत्यनुज्ञातः प्रणवेन सर्वं पिबेत् । एतच्च ग्रामाद्बहिर्नद्यादेस्तीरे नक्षत्रदर्शने कार्यमशक्तौ गोमूत्रादि स्वल्पं ग्राह्यमस्मिन्दिन उपवासः सक्तस्यान्यस्य हविष्याशनमिति । पञ्चगव्यं प्राश्य गृहमागत्य विष्णुं स्मरन्मौनी निशामतिवाह्य प्रक्रान्तप्रायश्चित्तं संकल्पानुसारेण प्रत्याम्नायद्वारा कृत्वोत्तराङ्गाणि कुर्यात् । व्याहृतिभिराज्यं पूर्ववद्धुत्वा पुनः पूर्ववत्प्रायश्चित्ताङ्गं विष्णुश्राद्धं कृत्वाऽन्त्यगोदानं पूर्ववच्चरेत् । एवं प्रायश्चित्तं कृत्वा शक्तौ सत्यां दानानि कुर्यात् ।

गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ।
रौप्यं लवणमित्याहुर्दश दानान्यनुक्रमात् ॥ इति प्रायश्चित्तम् ।

ततः करिष्यमाणगायत्रीपुरश्चरणाधिकारसिद्ध्यर्थं कूष्माण्डहोमं कुर्यात् । तद्यथा-देशकालसंकीर्तनान्ते ममैनोनिबर्हणपूर्वककरिष्यमाणगायत्रीपुरश्चरणाधिकारसिद्ध्यर्थं द्वादशरात्रं षड्रात्रं त्रिरात्रं वा कूष्माण्डैर्होष्यामीति संकल्प्य स्वपाकयज्ञविधानेनौपासना (ना) ग्नौ लौकिकाग्नौ वोक्तरीत्या सर्वं तन्त्रं कुर्यात् ।

इति श्रीमच्चित्तपावनकुलाब्धिसंभवधारे इत्युपनामकबल्लालसूनुशंकरविरचितायां गायत्रीपुरश्चरणपद्धतावुपोद्घातप्रकरणम् ।

-----

अथ विश्वामित्रवसिष्ठकल्पानुयायी प्रयोगो लिख्यते । तत्राऽऽदौ गायत्रीपुरश्चरणारम्भादिनकृत्यमुच्यते । तत्र दीक्षितो ब्राह्मे मुहूर्त उत्थाय रात्रिवासो विहायान्यत्परिधाय हस्तौ पादौ प्रक्षाल्य द्विराचम्य समुपविश्य श्रीगुरुं ध्यायेत । तद्यथा---ब्रह्मरन्ध्रस्थश्वेतसहस्रदलकर्णिकान्तर्गतचिदमृतमण्डलमध्यस्थहंसपीठस्थं श्रीगुरुं ध्यात्वा मानसोपचारैः संपूज्य प्रणम्य तद्रूपमात्मानं ध्यायन्गायत्रीवाच्यमात्मरूपं तेजो मूला (धारा) दिविधिबिलान्तं ध्यात्वा तत्प्रभाविद्धमात्मदेहं ध्यात्वा यथावदुच्चारादिमुखप्रक्षालनान्तं निर्वर्त्य नद्यादौ गृहे वा स्वशाखोक्तमार्गेण स्नात्वा तिलकादिसंध्यावन्दनान्तं निर्वर्तयेत् । ततो दीक्षितः संभृतसंभारो दर्भेष्वासीनो दर्भान्धारयमाणः प्राङ् मुख उदङ्मुखो वा शुचीनध्यात्मविदो ब्राह्मणानुपवेश्येष्टदेवताब्राह्मणवन्दनपूर्वकं प्रधानसंकल्पं कुर्यात् । तत्र केचन केवलं त्रिपदायाः सावित्र्याश्चतुर्विंशतिलक्षात्मकं पुरश्चरणमिच्छन्ति । अपरे त्रिपदायाश्चतुर्विंशतिलक्षं तथा जपसाद्गुण्यार्थं तुरीयपादसहितत्रिपदाया लक्षत्रयमधिकमिच्छन्ति । अन्ये त्रिपदाया एकविंशतिलक्षं तथा जपसाद्गुण्यार्थं तुरीयपादसहितया लक्षत्रयमेवं चतुर्विंशतिलक्षमिच्छन्ति । अत्र यथासंभवं यथासंप्रदायं कर्तव्यम् । तत्र बहवश्चतुर्विंशति लक्षान्तर्गततुरीयपादजपं कुर्वन्ति । तत्र प्रधानसंकल्पो यथा—आचम्य प्राणानायम्य सुमुखश्चेत्यादिदेशकालसंकीर्तनान्ते ममाऽऽत्मशुद्धिपूर्वककरिष्यमाणामुकलक्षात्मकगायत्रीपुरश्चरणाधिकारसिद्धिद्वारा श्रीपरमे-

श्चरमीत्यर्थं मायश्चित्तत्वेन लक्षत्रयपरिमितं गायत्रीजपमहं करिष्येऽमुकलक्षं वा। तथा मन्त्रशुद्धयर्थं दशसहस्रपरिमितदशप्रणवसंयुक्तगायत्रीजपमहं करिष्ये। तथा मन्त्रसिद्धयर्थं शिरोन्तं व्याहृत्यादिपूर्वकलक्षपरिमितगायत्रीजपमहं करिष्ये यथाशक्ति ब्राह्मणद्वारा वा। तथा ममेह जन्मनि जन्मान्तरे वा वाङ्मनःकायकृतानां महापातकसमपातकानामहरहाकृतानां सकृदसकृदभ्यासविषयाणां सर्वेषां पातकानां शोधनपूर्वकं धर्मार्थकाममोक्षासिद्धिद्वारा सर्वात्मनः सर्वशक्तेः सर्वावभासकतेजोमयस्य श्रीपरमेश्वरस्य प्रीतिकामोऽहं निरस्तानर्थरूपस्वप्रकाशचिदानन्दात्मकब्रह्मविद्यायाः सावित्र्या गायत्र्याः कल्पोक्तं चतुर्विंशतिलक्षात्मकममुकलक्षात्मकं वा पुरश्चरणं करिष्य इति संकल्प्य तदङ्गविहितगणेशपूजनपूर्वकं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धमाचार्यादिवरणं कृतसंख्यापूर्त्यर्थं गायत्रीजपं कर्तुं स्वप्रतिनिधित्वेन ऋत्विग्वरणं च करिष्ये। स्वकर्तृत्वे तु ऋत्विगादिवरणं न कुर्यात्। ततः स्वशाखोक्तविधिना गणेशपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं (च) कुर्यात्। प्रजापतिः प्रीयतामित्यस्य स्थाने सविता प्रीयतामिति विशेषः। तत आचार्यादीन्वृणुयात्। तद्यथाऽमुकगोत्रोऽमुकशर्माऽहं क्रियमाणेऽमुकसंख्याकगायत्रीपुरश्चरणकरणे विहितकर्मकर्तुं शान्तं दान्तं मन्त्रविदममुकगोत्रममुकशर्माणमाचार्यं त्वामहं वृण इति वृत्वा प्रार्थयेत्-

आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ इति।

एवमेव ब्रह्माणं वृत्वा प्रार्थयेत्-

यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः।
तथा त्वं मम यज्ञेऽस्मिन्ब्रह्मा भव द्विजोत्तम ॥ इति।

एवमेव सदस्यं प्रार्थयेत्-

त्वं नो गुरुः पिता माता त्वं प्रभुस्त्वं परायणम्।
आचार्यादिभिः संयुक्तः कुरु कर्म यथोदितम् ॥
आपद्विमोक्षणार्थाय सदस्यं त्वामहं वृणे ॥ इति।

तथैवोपद्रष्टारं वृत्वा प्रार्थयेत्-

भगवन्सर्वधर्मज्ञ सर्वधर्मभृतां वर।
वितते मम यज्ञेऽस्मिन्नुपद्रष्टा भव द्विज॥ इति।

ततः सर्वान्प्रार्थयेत्—

अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया।
सुप्रसन्नैश्च कर्तव्यं कर्मेदं विधिपूर्वकम्॥ इति।

क्रियमाणामुकलक्षगायत्रीपुरश्चरणमध्येऽमुकसंख्याकं जपं कर्तुं स्वप्रतिनिधित्वेन त्वामहं वृण इत्येवं शुचीनन्यानृत्विजो यथासंख्यं प्रत्येकं वृत्वा यथाविभवं तेषां सर्वेषामासनवस्त्रपात्रालंकारचन्दनादिभिर्मधुपर्कपूजां कुर्यात्। तद्यथा—देशकालसंकीर्तनान्ते यजमानो वृतानामृत्विजामर्हयिष्य इति संकल्प्यार्हशास्त्रेण सर्वान्पूजयेत्। ततः सर्वे आचार्यादयोऽधिकारासिद्ध्यर्थं प्रायश्चित्तं कुर्युः। यद्यथा— ऋत्विक्सहित आचार्यो देशकालौ संकीर्त्यामुकशर्मणो यजमानस्य करिष्यमाणचतुर्विंशतिलक्षात्मके गायत्रीपुरश्चरणे यथांशेन जपादिकरणाधिकारसिद्ध्यर्थं कृच्छ्रत्रयप्रायश्चित्तममुकप्रत्याम्नायेनाऽऽचरिष्य इति संकल्प्य जपहोमगोदानाद्यन्यतरप्रत्याम्नायेनाऽऽचरेत्। तदन्तेऽमुकशर्मणो गायत्रीपुरश्चरणे कृच्छ्रतयानुष्ठानेनाधिकारसिद्धिरस्त्विति ब्राह्मणान्प्रति वदेत्। तेऽपि सिद्धिरस्त्विति ब्रूयुः। ततोऽमुकशर्मणोऽनुज्ञया तत्प्रतिनिधित्वेन करिष्यमाणगायत्रीपुरश्चरणे पूर्वाङ्गत्वेन विहितं मन्त्रसिद्ध्यर्थं गायत्र्या अयुतजपमहं करिष्य इति संकल्प्याऽऽद्यन्ते प्रणवसहितव्याहृतित्रययुतगायत्रीजपमयुतं कृत्वैतानि सूक्तानि जपेत्। पञ्चप्रणवान्वितायाः इत्यपरे। आपो हि ष्ठेति तिसृभिः; दशप्रणवसहिताया इत्यन्ये। दशप्रणवसहिताया इत्यपरे। आपो हि ष्ठेति तसावित्र्या जपमयुतं कुर्यादित्यन्ये। दशप्रणवसहिताया इत्यपरे। आपो हि ष्ठेति

सूक्तमेतोन्विन्द्रमिति तिस्रः ऋतं च सत्यमिति सूक्तं स्वस्ति न इत्याद्याः स्वस्तिमतीः स्वादिष्ठयेत्याद्याः पावमानीश्च सर्वा जपेत्प्रत्येकं दशवारम्। अन्त्ये तु तत्सवितुरित्यस्या ऋच आचार्यं विश्वामित्रं तर्पयामि। गायत्रीछन्दस्तर्पयामि। सवितारं तर्पयामि। इति तर्पयित्वा रुद्रं नमस्कृत्य कद्रुद्रायेत्यादीनि रुद्रसूक्तानि जपेत्।

अथ मालासंस्कारः। तत्र मालासंस्कारं करिष्य इति संकल्प्य कुशोदकसहितैः पञ्चगव्यैर्मालां प्रक्षाल्य ॐ ह्रीं अंआंइंईमित्यादिक्षकारान्तानि मातृका-

क्षराण्यश्वत्थपत्रस्थापितमालायां विन्यस्य सद्योजातादिपञ्चमन्त्राञ्जपित्वैतेषां मध्ये प्रथमेन मन्त्रेण पञ्चगव्येन शीतलजलेन च मालां प्रक्षाल्य द्वितीयेन मन्त्रेण चन्दनादिना विघृष्य तृतीयेन मालां धूपयित्वा चतुर्थेन चन्दनकस्तूर्यादिना लेपयित्वा पञ्चममन्त्रेण प्रतिमण्यभिमन्त्रयेत् । अघोरेभ्य इति मन्त्रेण मेरुं शतवारमभिमन्त्रयेत् । तत एतैरेव पञ्चभिर्मन्त्रैः पञ्चोपचारैर्मालामिष्टदेवतावत्पूजयेदिति मालासंस्कारः । इति प्रारम्भदिनकृत्यम् ।

## अथ नित्यविधिः ।

तत्र ऋत्विक्सहित आचार्यः पूजासामग्रीसहितः पूजार्थं द्वारदेवतापूजनपूर्वकं बहुदीपप्रकाशाढ्यं सुरभिधूपैश्च धूपितं यागमण्डपं यागगृहं गृहं वा प्रविशेत् । तत्राऽऽदौ द्वारपूजा । द्वारपूजां करिष्य इति संकल्प्य द्वारस्य पुरत ॐ नमः सूर्याय । ॐ गं गणेशाय नमः । प्रणवः सर्वत्र । सं सरस्वत्यै नमः । सं सवित्रे नमः । ह्रौं सदाशिवाय नमः । ऐंह्रींश्रीं परशक्तये नमः । द्रीं दीपनाथाय नमः । क्षं क्षेत्रपालाय नमः । दक्षिणसव्यभागावेकैकमक्षतैः संपूज्य( जपेत् ), एवं प्रतिद्वारम् । ततः पश्चिमद्वारे साक्षतं सूर्यायार्घ्यं दत्त्वा वामाङ्गं संकोचयन्दक्षिणपादपूर्वकं मण्डपान्तः प्रविश्य वेदीमण्डपस्य पूर्वद्वार ऊर्ध्वं द्वारश्रियै नमः । देहल्यै नमः । दक्षिणसव्यभागयोर्धात्रे नमः । विधात्रे नमः । गङ्गायै नमः । यमुनायै नमः । भद्रायै नमः । सुभद्रायै नमः । एवं दक्षिणपश्चिमोत्तरद्वारेषु । तत्र दक्षिणद्वार ऊर्ध्वं द्वारश्रियै नमः । देहल्यै नमः । दक्षिणसव्यभागयोर्धात्रे नमः । विधात्रे नमः । गोदायै नमः छष्णायै नमः चण्डायै नमः । प्रचण्डायै नमः । पश्चिमद्वार ऊर्ध्वं द्वारश्रियै नमः । देहल्यै नमः । दक्षिणसव्यभागयोर्धात्रे नमः । विधात्रे नमः । रेवायै नमः । ताप्त्यै नमः शङ्खनिधये नमः । पद्मनिधये नमः । उत्तरद्वारे द्वारश्रियै नमः । देहल्यै नमः । दक्षिणसव्यभागयोर्धात्रे नमः । विधात्रे नमः । बाणायै नमः । वेण्यै नमः । महानिधय नमः । महेश्वराय नमः । गृहोपरि गृहेशाय नमः । गृहमध्ये यागगृहाय नमः । कुलदेव्यै नमः । ततो मण्डपान्तः स्थित्वा यदत्र संस्थितं भूतमिति सर्षपान्विकीर्य ततः पञ्चगव्येन कुशैः शुचीवो हव्येत्यापो हि ष्ठेति तृचेना

नरनारायणेन च सर्वत्र प्रोक्ष्य देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्व, ततः स्वस्त्ययनं तार्क्ष्यमिति मन्त्रद्वयं पठेत् ततस्त्रिवप्रोपेतायां हस्तमात्रोत्सेधायां हस्तमात्रसमचतुरस्रायां वेदिकायां वास्तुपुरुषाय नमः। तत आचार्यादय आचमनादिविधिपूर्वकं जपादिसंकल्पं कुर्युः। तद्यथा—तत्र प्रथममाचमनविधिः। सर्वे स्वासनेषूपविश्य केशवाय नारायणाय माधवायेति त्रिराचम्य गोविन्दादिकृष्णान्तं यथास्थानं विन्यस्य प्राणायामं कुर्युः। प्रणवस्य ब्रह्मा ऋषिः परमात्मा देवता दैवी गायत्री छन्दः सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजभृगुगोतमकश्यपवसिष्ठा ऋषयोऽग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वे देवा देवता गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि गायत्र्या गाथिनो विश्वामित्रर्षिः सविता देवता गायत्री छन्दो गायत्रीशिरसो ब्रह्मा ऋषिः परमात्मा देवता दैवी गायत्री छन्दः प्राणायामे विनियोगः। ततो यथोपदेशं मनसैकवारं सप्रणवां सव्याहृतिकां सशिरस्कां गायत्रीं जपन्वामनासया वायुमापूर्य तथैव कुम्भयित्वा तथैव दक्षिणनासिकया रेचयेत्। अयमेकः प्राणायामः। एवं प्राणायामत्रयं कुर्यात्। प्राणायामलक्षणमाग्नेये -

दशप्रणवसंयुक्तां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते॥

ततो देवताः प्रार्थयेत्—

सोमः सूर्यो यमः कालः संध्ये भूतान्यहः क्षपा।
पवनो दिक्पतिर्भूमिराकाशं खेचरामराः॥
ब्रह्मशासनमास्थाय कल्पध्वमिह संनिधिम्।

ततः सुमुखश्चैकदन्तश्चेत्यादिदेशकालसंकीर्तनान्तेऽमुकशर्मणो यजमानस्य कृतपूर्वसंकल्पसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पूर्वसंकल्पितचतुर्विंशतिलक्षात्मकगायत्रीपुरश्चरणमध्ये यथांशेन गायत्रीजपमहं करिष्य इति संकल्प्य तद् विहितं शरीरशुद्धिपूर्वकं गायत्रीमन्त्रजपाधिकारसिद्ध्यर्थं पवनपावन भूतशुद्धिप्राणप्रतिष्ठान्तर्मातृकाबहिर्मातृकागायत्रीन्यासांश्चाहं करिष्य इति संकल्पयेत्। तत एकैको ब्राह्मणः कुशाद्यासनोपविष्टः पवित्रपाणिरात्मानं पावयिष्ये [ इति संकल्पयेत् ]।

## अथ पवनपावनम् ।

आचार्य ऋत्विग्यजमानैः सहैकविंशतिदर्भपिञ्जूलानादाय सप्तभिः सप्तभिः पावयति–

चित्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ।

नाभ्याः सोदकैर्दर्भैर्मुखपर्यन्तं समार्ष्टि संक्रन्मन्त्रेण द्विस्तूष्णीम् ।

यद्देवा देवहेडनम् । देवासश्चकृमा वयम् । आदित्यास्तस्मान्मामुञ्चत । ऋतस्यर्तेन मामुत । देवा जीवनकाम्या यत् । वाचाऽनृतमूदिम । अग्निर्मा तस्मादेनसः । गार्हपत्यः प्रमुञ्चतु । दुरिता यानि चकृम । करोतु मामनेनसम् ॥ १ ॥

ऋतेन द्यावापृथिवी । ऋतेन त्वꣳ सरस्वति । ऋतान्मा मुञ्चताꣳहसः । यदन्यकृतमारिम । सजातशꣳसादुत वा जामिशꣳसात् । ज्यायसः शꣳसादुत वा कनीयसः । अनाज्ञातं देवकृतं यदेनः । तस्मात्त्वमस्मान् जातवेदो मुमुग्धि । यद्वाचा यन्मनसा । बाहुभ्यामूरुभ्यामष्ठीवद्भ्याम् ॥ २ ॥

शिश्नैर्यदनृतं चकृमा वयम् । अग्निर्मा तस्मादेनसः । यद्धस्ताभ्यां चकर किल्बिषाणि अक्षाणां वग्नुमुपजिघ्नमानः । दूरेपश्या च राष्ट्रभृच्च । तान्यप्सरसावनुदत्तामृणानि । अदीव्यन्नृणं यदहं चकार । यद्वाऽदास्यन्त्संजगारा जनेभ्यः । अग्निर्मा तस्मादेनसः । यन्मयि माता गर्भे सति ॥ ३ ॥

एनश्चकार यत्पिता । अग्निर्मा तस्मादेनसः । यदा पिपेष मातरं पितरम् । पुत्रः प्रमुदितो धयन् । अहिꣳसितौ पितरौ मया तत् । तदग्ने अनृणो भवामि । यदन्तरिक्षं पृथिवीमुत द्याम् । यन्मातरं पितरं वा जिहिꣳसिम । अग्निर्मा तस्मादेनसः । यदाशसा निशसा यत्पराशसा ॥ ४ ॥

यदेनश्चकृमा नूतनं यत्पुराणम्। अग्निर्मा तस्मादेनसः। आर्तिकामाभि दुरितं यदेनः। जहामि रिप्रं परमे सधस्थे। यत्र यन्ति सुकृतो नापि दुष्कृतः। तमारोहामि सुकृतां नु लोकम्। त्रिते देवा अमृजतैतदेनः। त्रित एतन्मनुष्येषु मा मृजे। ततो मा यदि किंचिदानशे। अग्निर्मा तस्मादेनसः॥ ५॥

गार्हपत्यः प्रमुञ्चतु। दुरिता यानि चकृम। करोतु मामनेनसम्। दिवि जाता अप्सु जाताः। या जाता ओषधीभ्यः। अथो या अग्निजा आपः। ता नः शुन्धन्तु शुन्धनीः। यदापो नक्तं दुरितं चराम। यद्वा दिवा नूतनं यत्पुराणम्। हिरण्यवर्णास्तत उत्पुनीत नः। इमं मे वरुण तत्त्वा यामि। त्वं नो अग्ने स त्वं नो अग्ने। त्वमग्ने अयासि॥ ६॥

(तै० ब्रा० अष्ट० ३। अ० ७। अनु० १२)।

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत्प्रण आयूंषि तारिषत्॥ [तै० सं० का० १ प्र० ५ अं० ११]।

तांस्त्यक्त्वाऽन्यान्गृहीत्वा—

वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः।

नाभ्याः सोदकैर्दर्भैर्नासिकापर्यन्तं संमार्ष्टि सकृन्मन्त्रेण द्विस्तूष्णीम्।

पवमानः सुवर्जनः। पवित्रेण विचर्षणिः। यः पोता स पुनातु मा। पुनन्तु मा देवजनाः। पुनन्तु मनवो धिया। पुनन्तु विश्व आयवः। जातवेदः पवित्रवत्। पवित्रेण पुनाहि मा। शुक्रेण देव दीद्यत्। अग्ने क्रत्वा क्रतूंरनु॥ १॥

यत्ते पवित्रमर्चिषि। अग्ने विततमन्तरा। ब्रह्म तेन पुनीमहे। उभाभ्यां देव सवितः। पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे। वैश्वदेवी पुनती

देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः । तया मदन्तः सध माद्येषु । वयꣳ स्याम पतयो रयीणाम् ॥ २ ॥

वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणेनेषिरो मयोभूः । द्यावापृथिवी पयसा पयोभिः । ऋतावरी यज्ञिये मा पुनीताम् । बृहद्भिः सवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः । अग्नेः दक्षैः पुनाहि मा । येन देवा अपुनत । येनाऽऽपो दिव्यंकशः । तेन दिव्येन ब्रह्मणा ॥ ३ ॥

इदं ब्रह्म पुनीमहे यः पावमानीरध्येति । ऋषिभिः संभृतꣳ रसम् । सर्वꣳ स पूतमश्नाति । स्वदितं मातरिश्वना । पावमानीर्यो अध्येति । ऋषिभिः संभृतꣳ रसम । तस्मै सरस्वती दुहे । क्षीरꣳ सर्पिर्मधूदकम् । पावमानीः स्वस्त्ययनीः ॥ ४ ॥

सुदुघा हि पयस्वतीः । ऋषिभिः संभृतो रसः । ब्राह्मणेष्वमृतꣳ हितम् । पावमानीर्दिशन्तु नः । इमं लोकमथो अमुम् । कामान्समर्धयन्तु नः । देवीर्देवः समाभृताः । पावमानीः स्वस्त्ययनीः । सुदुघा हि घृतश्चुतः । ऋषिभिः संभृतो रसः ॥ ५ ॥

ब्राह्मणेष्वमृतꣳ हितम् । येन देवाः पवित्रेण । आत्मानं पुनते सदा तेन सहस्रधारेण । पावमान्यः पुनन्तु मा । प्राजापत्यं पवित्रम् । शतोद्यामꣳ हिरण्मयम् । तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे । इन्द्रः सुनीती सह मा पुनातु । सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणाभिः पुनातु मा । जातवेदा मोर्जयन्त्या पुनातु ॥ ६ ॥

( तै० ब्रा० अष्ट० १ अ० ४ अनु० ८ ।

आपो हि ष्ठेति ऋक्त्रयम् । तांस्त्यक्त्वाऽन्यान्गृहीत्वा–

देवो मां सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ।

नाभ्याः सोदकैर्दर्भैर्ललाटपर्यन्तं संमार्ष्टि सकृन्मन्त्रेण द्विस्तूष्णीम् ।

तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम् ॥

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ॥

अग्निं या गर्भं दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु ॥

( तै० सं० का० ५ प्र० ६ अ० १ ) ।

यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।

मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳ स्योना भवन्तु ॥

( तै० सं० का० ५ प्र० ६ अ० १ ) ।

यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।

याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शꣳ स्योना भवन्तु ॥

( तै० सं० का० ५ प्र० ६ अ० १ ) ।

शिवेन मा चक्षुषा पश्यताऽऽपः शिवया तनुवोपस्पृशत त्वचं मे । सर्वाꣳ अग्नीꣳरप्सुषदो हुवो मयि वर्चो बलमोजो निधत्त ॥

( तै० सं० का० ५ प्र० ६ अ० १ ) ।

तांस्त्यक्त्वा भूर्भुवः सुवः अपः प्राश्य आपो हि ष्ठा इति तिसृभिर्ऋग्भिर्मुखं निमृज्यैतैर्विपर्ययेणाऽऽचामेत् ।

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥

( तै० आ० प्र० १० अ० १ ) ।

पयस्वतीरोषधयः । पयस्वद्वीरुधां पयः ।

अपां पयसो यत्पयस्तेन मामिन्द्र सꣳसृज ॥

( तै० १।५।१०।२।३ ) ।

इत्यपः प्राश्य स्मृत्युक्तमाचमनं कृत्वा गायत्रीं शतकृत्व आवर्तयेत् । सहस्रकृत्वोऽपरिमितकृत्वो वा । दशावरमिडाजपः ।

इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वे देवाः । सूक्तवाचः पृथिवि मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥

[ तै० सं० अ० ३ प्र० ३ अ० २ ]

अप नः शोशुचदघमग्ने शुशुध्या रयिम् । अप नः शोशुचदघम् ।

सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघम् ।

प्र यद्भन्दिष्ठ एषां प्राऽस्माकासश्च सूरयः । अप न शोशुचदघम् ।

प्र यदग्नेः सहस्वतो विश्वतो यन्ति सूरयः । अप नः शोशुचदघम ।

प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम् । अप नः शोशुचदघम् ।

त्वꣳ हि विश्वतोमुख विश्वतः परिभूरसि । अप नः शोशुचदघम् ।

द्विषो नो विश्वतोमुखाऽति नावेव पारय । अप नः शोशुचदघम् ।

स नः सिन्धुमिव नावयाऽति पर्षा स्वस्तये । अप नः शोशुचदघम् ।

आपः प्रवणादिव यतीरपास्मत्स्यन्दतामघम् । अप नः शोशुचदघम् ।

उद्वनादुदकानीनापास्मात्स्यन्दतामघम् । अप नः शोशुचदघम् ।

आनन्दाय प्रमोदाय पुनरागाꣳ स्वान्गृहान् । अप नः शोशुचदघम् ।

न वै तत्र प्रमीयते गौरश्वः पुरुषः पशुः । यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कम् । अप नः शोशुचदघम् ॥

( तै० आर० प्रपा० ६ अ० ११ )

सहस्रशीर्षा इत्यादि सन्ति देवा इत्यन्तं पुरुषसूक्तं पठेत् ।

ॐ सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ।
पुरुष एवेदꣳ सर्वम् । यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानः । यदन्नेनातिरोहति ।
एतावानस्य महिमा । अतोज्यायाꣳश्च पूरुषः ॥ १ ॥
पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ।
त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत् । साशनानशने अभि ।
तस्माद्विराडजायत । विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ॥ २ ॥
यत्पुरुषेण हविषा । देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मः शरद्धविः ।
सप्तास्यासन्परिधयः । त्रिःसप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वानाः । अबध्नन्पुरुषं पशुम् ।
तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः ॥ ३ ॥
तेन देवा अयजन्त । साध्या ऋषयश्च ये ।
तस्माद्यज्ञात्सर्वहुतः । संभृतं पृषदाज्यम् ।
पशूꣳस्ताꣳश्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये ।
तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे ।

छन्दांसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥ ४ ॥

तस्मादश्वा अजायन्त । ये के चोभयादतः ।

गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः ।

यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् ।

मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते ।

ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ॥ ५ ॥

ऊरू तदस्य यद्वैश्यः । पद्भ्याः शूद्रो अजायत ।

चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत् ।

मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ।

नाभ्यां आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत ।

पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाः अकल्पयन् ॥ ६ ॥

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे ।

सर्वाणि रूपाणि विचित्य धीरः ।

नामानि कृत्वाऽभिवदन्यदास्ते ।

धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः ।

तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ।

यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् ।

ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ॥ ७ ॥

इति पवनपावनम् ।

ततो भूतशुद्धिं कुर्यात्तद्यथा—ऊर्ध्वकेशीति शिखां बद्ध्वा अपसर्पन्तु ते भूता इति वामपादेन भूमावाघातत्रयं कृत्वा—अपक्रामन्तु भूतानित्युत्सार्य

तीक्ष्णदंष्ट्र महाकायेति क्षेत्रपालं नत्वा पृथ्वीतिमन्त्रस्य मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छन्द आसने विनियोगः ।

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारच मां देवि पवित्रं कुरु चाऽऽसनम् ॥

ॐ आधारशक्तये नमः । ॐ कूर्मासनाय नमः । ॐ अनन्तासनाय नमः । ॐ योगासनाय नमः । ॐ विमलासनाय नमः । ॐ पद्मासनाय नमः । मध्ये ॐ परमसुखासनाय नमः । इत्यासन उपविश्य स्वाशिरासि गुं गुरुभ्यो नमः । पं परमेष्ठिगुरुभ्यो नमः । पं परात्परगुरुभ्यो नमः . गं गणपतये नमः । दुं दुर्गायै नमः । क्षं क्षेत्रपालाय नमः : सं सरस्वत्यै नमः । पं परमात्मने नमः ।

नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः ।
आचार्यसिद्धेश्वरपादुकाभ्यो नमोऽस्तु लक्ष्मीपतिपादुकाभ्यः ॥
नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान्यदि शक्नवाम मा ज्यायसः शं समावृक्षि देवाः ॥

इति पठित्वा सर्वभूतनिवारणाय सशार्ङ्गाय सशरायास्त्रराजाय सुदर्शनाय हुंफडित्यङ्गुलिभ्यां दिग्बन्धं कृत्वा—

धर्मकन्दसमुद्भूतं ज्ञाननालसुशोभितम् ।
ऐश्वर्याष्टदलोपेतं परवैराग्यकर्णिकम् ॥
अधोमुखं तु हृत्पद्मं प्रणवेनोर्ध्वमुन्नयेत् ।

प्रणवेन विकासितं कृत्वा तत्रस्थं जीवात्मानं हंसमन्त्रेणाङ्कुशमुद्रया सुषुम्नानाडीमार्गेण ब्रह्मरन्ध्रं नीत्वा तत्रत्यसहस्रदलपद्मकर्णिकान्तर्गतेन परमात्मना सहैक्यभावमापादयेत् ।

ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥
तत्संसर्गिपदद्वंद्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥

अधोमुखं कृष्णवर्णमङ्गुष्ठपरिमाणकम् ।
खड्गचर्मधरं पापं वामकुक्षौ विचिन्तयेत् ॥

इति वामकुक्षौ पापपुरुषं विचिन्त्य यमिति षोडशवारं वायुबीजेन वाम नासारन्ध्रेण वायुमावर्तयन्संशोष्य रमित्यग्निबीजेन कुम्भकेन चतुष्षष्टिवारं संदह्य पुनर्यमितिवायुबीजेन दक्षिणनासापुटेन द्वात्रिंशद्वारं बहिर्निःसार्य वमित्यमृतबीजेन षोडशवारमाप्लाव्य भूतशुद्धिं कुर्यात् । पादादिजानुपर्यन्तं पृथिवीस्थानं तत्र पार्थिवमण्डलं चतुरस्रं चतुर्दिक्षु वज्रलाञ्छितं पीतवर्णं तन्मध्ये लंबीजयुक्तं ध्यायेत् । स्योना पृथिवीति मेधातिथिर्भूमिर्गायत्री भूमिमण्डलशुद्ध्यर्थं जपे विनियोगः । ॐस्योना पृथिवि० लं भूम्यै नमः । जान्वादि नाभिपर्यन्तमपां स्थानं तत्र वारुणं मण्डलं धनुराकारमुभयाः कोट्योः श्वेतपद्मलाञ्छितं तन्मध्ये शुभ्रवर्णं वंबीजयुक्तं ध्यायेत् । अप्सु मे इति मेधातिथिरापोऽनुष्टुबापमण्डलशुद्ध्यर्थं जपे विनियोगः । ॐ अप्सुमे सोमो अब्रवी० वमद्भ्यो नमः । नाभ्यादि हृदयपर्यन्तमग्निस्थानं तत्र त्रिकोणं वह्निमण्डलं कोणेषु स्वस्तिकलाञ्छितं तन्मध्ये रक्तवर्णं रंबीजयुक्तं ध्यायेत् । अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्री वह्निमण्डलशुद्ध्यर्थं जपे विनियोगः । ॐ अग्निं दूतं० रमग्नये नमः । हृदयादि भ्रूमध्यपर्यन्तं वायुस्थानं तत्र षट्कोणं वायुमण्डलं षड्बिन्दुवज्रलाञ्छितं तन्मध्ये धूम्रवर्णं यंबीजयुक्तं ध्यायेत् । वायो शतं वामदेवो वायुरनुष्टुभ् वायुमण्डलशुद्ध्यर्थं जपे विनियोगः । ॐ वायो शतं० यंवायवे नमः । भ्रूमध्यादि ब्रह्मरन्ध्रपर्यन्तमाकाशस्थानं तत्र वृत्ताकारमाकाशमण्डलं ध्वजाङ्कितं तन्मध्ये नीलवर्णं हंबीज युक्तं ध्यायेत् । आदित्प्रत्नस्य वत्सोऽन्तरिक्षं गायत्र्याकाशमण्डलशुद्ध्यर्थं जपे विनियोगः । ॐ आदित्प्रत्नस्य० हमाकाशाय नमः । पृथिवीं पञ्चगुणां लंबीजेन षडुद्घातप्रयोगेणाप्सु प्रविलापयामि । लं ६ तत्रोद्घातलक्षणम्—

भूतबीजं व्योमसंस्थं प्लुतप्रणवसंयुतम् ।
दीर्घोच्चारसमायुक्तमुपोद्घात उदाहृतः ॥

प्रणवाभ्यां संनिरुध्य मन्त्रबीजं तु मन्त्रवित् ।
जपेच्च द्वादशकृत्व उपोद्घातो भवेत्तदा ॥ इति ।

चतुर्गुणा अपो वंबीजेन पञ्चोद्घातप्रयोगेणाग्नौ प्रविलापयामि । वं ५ । त्रिगुणं वह्निं रंबीजेन चतुरुद्घातप्रयोगेण वायौ प्रविलापयामि । रं ४ । द्विगुणं वायुं यंबीजेन त्रिरुद्घातप्रयोगेणाऽऽकाशे प्रविलापयामि । यं ३ । एकगुणमाकाशं हंबीजेन द्विरुद्घातप्रयोगेणाहंकारे प्रविलापयामि । हं २ । तमहंकारं महत्तत्त्वे प्रविलापयामि । तन्महत्तत्त्वं प्रकृतौ प्रविलापयामि । तां प्रकृतिं परब्रह्मणि प्रविलापयामीति प्रविलाप्य शुद्धोऽहं मुक्तोऽहं सच्चिदानन्दस्वरूपोऽहं ब्रह्माहमस्मीति चिरं भावयेत् । ततः सिसृक्षया सृष्टिमारभेत् तस्मात्सर्वज्ञात्सर्वशक्तेः परब्रह्मणः सकाशात्प्रकृतिः । प्रकृतेर्महान् । महतोऽहंकारः । अहंकारादाकाशः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधिभ्योऽन्नम् । अन्नाद्रेतः । रेतसः पुरुषः । स वैष पुरुषोऽन्नरसमयः । इति क्रमेण शरीरोत्पत्तिं विभाव्य पुनर्जीवात्मानं हंसमन्त्रेणाङ्कुशमुद्रया सुषुम्नानाडीमार्गेणाऽऽनीय हृदि प्रतिष्ठापयेत् ॥ इति भूतशुद्धिः ॥

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषय ऋग्यजुःसामाथर्वाणि छन्दांसि चैतन्यरूपा परा प्राणशक्तिर्देवता आं बीजं ह्रीं शक्तिः क्रों कीलकं प्राणप्रतिष्ठापने विनियोगः । ॐ आंह्रींक्रोंअंकंखंगंघंङंआंक्रोंह्रींआम् आकाशवायुतेजोजलपृथिव्यात्मनेऽङ्गुष्ठाभ्यां नमः । ॐ आंह्रींक्रोंइंचंछंजंझंञंईंक्रोंह्रींआं शब्दस्पर्शरूपरसगन्धात्मने तर्जनीभ्यां नमः । ॐआंह्रींक्रोंउंटंठंडंढंणंऊंक्रोंह्रींआं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां नमः । ॐआंह्रींक्रोंएंतंथंदंधंनंऐंक्रोंह्रींआं वाक्पाणिपादपायूपस्थात्मनेऽनामिकाभ्यां नमः । ॐआंह्रींक्रोंओंपंफंबंभंमंऔंक्रोंह्रींआं वचनादानगतिविसर्गानन्दात्मने कनिष्ठिकाभ्यां नमः । ॐआंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षं अःक्रोंह्रीं आं मनोबुद्ध्यहंकारचित्तविज्ञानात्मने करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि । ॐआंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षं अःक्रोंह्रीं आं मम प्राणा इह प्राणाः । ॐआंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षं अःक्रोंह्रीं आं मम जीव इह स्थितः । ॐ आंह्रींक्रों अंयंरंलंवंशंषंसंहंक्षं अः क्रोंह्रीं आं मम सर्वे-

न्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थप्राणापानव्यानोदानसमानाः सुखमिहाऽऽगत्य चिरं तिष्ठन्तु स्वाहा । ॐअसुनीते पुनः ऋक् । ततो गर्भाधानादिपञ्चदशसंस्कारसिद्ध्यर्थं पञ्चदशवारं प्रणवावृत्तिं करिष्ये । ॐ १५ । ततः ।

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्च बाणान् ।
बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ १ ॥

इति प्राणप्रतिष्ठा । अथान्तर्मातृकान्यासः—

अन्तर्मातृकामन्त्रस्य ब्रह्मा ऋषिर्मातृकासरस्वती देवता हलो बीजानि स्वराः शक्तयो बिन्दवः कीलकान्यन्तर्मातृकान्यासे विनियोगः । ॐ अंकंखंगंघंङं-आमङ्गुष्ठाभ्यां नमः । ॐइंचंछंजंझंञंई तर्जनीभ्यां नमः । ॐ उंटंठंडंढंणंऊमध्यमाभ्यां नमः । ॐ एंतंथंदंधंनं ऐमनामिकाभ्यां नमः । ॐओंपंफंबंभंमंऔं कानिष्ठिकाभ्यां नमः । ॐ अंयंरंलंवंशंषंसंहंक्षं अः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि । ॐ अंनमः । आंनमः । इंनमः । ईंनमः । उंनमः । ऊंनमः । एंनमः । ऐंनमः । ओंनमः । औंनमः । अंनमः । अःनमः । ॐकारः सर्वत्र । एतान्षोडश स्वरान्कण्ठस्थानगते षोडशदले विन्यसामि । ॐ कंखंगंघंङंचंछंजंझंञंटंठं नम एतान्द्वादश वर्णान्द्वादशदले हृदयस्थाने विन्यसामि । ॐ डंढंणंतंथंदंधंनंपंफं नम एतान्दश वर्णान्नाभिस्थले दशदले विन्यसामि । ॐ-बंभंमंयंरंलं नम एतान्षड्वर्णान् लिङ्गस्थाने षड्दले विन्यसामि । ॐ वंशंषंसं नम एतान् चतुर्वर्णानाधारस्थाने चतुर्दले विन्यसामि । ॐ हंक्षं नम एतद्वर्णद्वयं भ्रूमध्ये द्विदले विन्यसामि । अथ ध्यानम्—

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदलदशदले द्वादशार्धे चतुष्के ।
वासान्ते बालमध्ये डफकठसहिते आदियुक्ते स्वराणां
हंक्षंतत्त्वार्थयुक्तं सकलतनुगतं वर्णरूपं नमामि ॥ १ ॥

इत्यन्तर्मातृकान्यासः । अथ बहिर्मातृकाः-

अन्तर्मातृकावत्पूर्वोक्तषडङ्गन्यासं कृत्वा विशेषन्यासं कुर्यात् । ॐअंनमः शिरसि । आंनमो ललाटे । इंनमो दक्षिणनेत्रे । ईंनमो वामनेत्रे । उंनमो दक्षिणकर्णे । ऊंनमो वामकर्णे । ऋंनमो दक्षिणनासापुटे । ॠंनमो वामनासापुटे । ऌंनमो दक्षिणगण्डे । ॡंनमो वामगण्डे । एंनम ऊर्ध्वोष्ठे । ऐंनमोऽधरोष्ठे । ओंनम ऊर्ध्वदन्तपङ्क्तौ । औंनमोऽधरदन्तपङ्क्तौ । अंनमो मूर्ध्नि । अः नम आस्ये । कं नमो दक्षिणबाहुमूले । खं नमो दक्षिणकूर्परे । गं नमो दक्षिणमणिबन्धे घं नमो दक्षिणहस्ताङ्गुलिमलेषु ङंनमो दक्षिणहस्ताङ्गुल्यग्रेषु । चंनमो वामबाहुमूले । छंनमो वामकूर्परे । जंनमो वाममणिबन्धे । झंनमो वामहस्ताङ्गुलिमूलेषु । ञंनमो वामहस्ताङ्गुल्यग्रेषु । टंनमो दक्षिणपादमूले । ठंनमो दक्षिणजानौ । डंनमो दक्षिणगुल्फे । ढंनमो दक्षिणपादाङ्गुलिमूलेषु । णंनमो दक्षिणपादाङ्गुल्यग्रेषु । तंनमो वामपादमूले । थंनमो वामजानौ । दंनमो वामगुल्फे । धंनमो वामपादाङ्गुलिमूलेषु । नंनमो वामपादाङ्गुल्यग्रेषु । पंनमो दक्षिणपार्श्वे । [ * फं ? ] बंनमः पृष्ठे । भंनमो नाभौ । मंनमो जठरे । यं त्वगात्मने हृदयाय नमः । रं असृगात्मने दोर्मूलाय नमः । लं मांसात्मने ककुदे नमः । वं मेदआत्मने कक्षाभ्यां नमः । शं अस्थ्यात्मने हृदयादिहस्तयुगलाय नमः । षं मज्जात्मने हृदयादिपादयुगलाय नमः । सं नमः शुक्रात्मने जठरे । हंनमः प्राणात्मने मुखे । क्षंनमो जीवात्मने सर्वशरीरेषु विन्यसामि ।

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था-
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ ॥

इति ध्यात्वा मानसोपचारैः संपूज्याकारादिक्षकारान्ता मातृका अनुलोमतो जपित्वा पश्चाद्विलोमतः पुनरनुलोमतो जपित्वा व्यापकत्वेन तत्तद्वर्णान्न्यसे-

* अत्रत्यं स्थानं सुधीभिर्मृग्यम् ।

त्। ते च वर्णा अनुक्रमेण अंआंइंईंउंऊंऋंॠंऌंॡंएंऐं ओं औंअंअः कंखंगंघंङं-चंछंजंझंञंटंठंडंढंणं तंथंदंधंनंपंफंबंभंमंयंरंलंवंशंषंसंहंक्षामिति । ततः

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।

गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

इति बहिर्मातृकान्यासः ।

तत ॐअंह्रां आत्मतत्त्वं शोधयामि स्वाहा । ॐउंह्रीं परतत्त्वं शोधयामि स्वाहा । ॐमंह्रूं परात्परतत्त्वं शोधयामि स्वाहा । इत्यपास्त्रिः पिबेत्। ततो गायत्र्या त्रिः प्राणानायम्य गायत्रीन्यासान्कुर्यात् । ॐगोविन्दाय नम ॐअङ्गुष्ठाभ्यां नमः ॐमहीधराय नम ॐतर्जनीभ्यां नमः । ॐहृषीकेशाय नम ॐमध्यमाभ्यां नमः। ॐत्रिविक्रमाय नम ॐअनामिकाभ्यां नमः । ॐविष्णवे नम ॐकनिष्ठिकाभ्यां नमः। ॐमाधवाय नम ॐकरतलकरपृष्ठाभ्यां नमः । एवं हृद-यादि । अथ प्रणवादिन्यासः । ॐकारस्य ब्रह्मा ऋषिर्गायत्री छन्दः परमात्मा देवता अं बीजं उं शक्तिः मं कीलकं विद्युवर्ण उदात्तः स्वरो लातव्यं गोत्रं भूर्भुवःस्वः क्षेत्रम् ऋग्यजुःसामाथर्वस्वरूपं संवर्ताग्निस्थापनं ब्रह्मतत्त्वं निर्गुणसवर्ण उपांशुसवनान्यात्मा स्वरूपं तुर्यावस्था योगमुद्रा ब्रह्मावाप्तिः फलम्। प्रणवमात्राणां वसिष्ठविश्वामित्रभरद्वाजा ऋषयो ब्रह्मविष्णुमहेश्वरा देवता गायत्रीत्रिष्टुब्जगत्यश्छ-न्दांसि भूरन्तरिक्षं द्यौः स्थानानि गार्हपत्यदक्षिणाग्न्याहवनीया रूपाणि पीतवि द्युच्छ्वेता वर्णा जाग्रत्स्वप्नसुषुप्तयोऽवस्थाः प्रातर्मध्यंदिनतृतीयसवनानि ब्रह्मवि ष्णुरुद्रपदावाप्तिः फलम् । अर्धमात्राबिन्दुनादानां पुरुषहंसवृषभध्वजा ऋषयः परमात्मपरमहंसवृषभध्वजा देवता विराडव्यक्त पङ्क्तिरिति छन्दांसि मायाबुद्धि-सरस्वत्यः शक्तयो ब्रह्मजीवोदानबीजान्यथर्वेतिहाससर्वोपनिषदः स्वरूपाणि सभ्या-वसथ्यत्रयोऽग्नयः स्थानानीत्युक्त्वा षट्त्रिंशद्वारं प्रणवेन प्राणानायम्य प्रणवेन पादादिशिरोन्तं त्रिर्व्यापकं कुर्यात् । ॐ अं अङ्गुष्ठाभ्यां नमः । ॐ उं तर्ज-नीभ्यां नमः। ॐ मं मध्यमाभ्यां नमः । ॐ अं अनामिकाभ्यां नमः। ॐ उं कनिष्ठिकाभ्यां नमः । ॐमं करतलकरपृष्ठाभ्यां नमः । एवं प्रणव

जातियुक् हृदयादिशिरोन्तम् ॐ अं नाभौ ॐ उं हृदये ॐमं शिरसीति न्यसेत्।

अथाङ्गे प्रणवान्न्यसेत्। पादयोश्चतुरः। जान्वोर्द्वौ। ऊर्वोः पञ्च। मेढ्रे षट्। स्फिचि द्वौ। गुह्ये दश। उदरे दश। वक्षसि द्वौ। गले दश। बाह्वोर्द्वौ। अंसयोर्द्वौ। मुखे द्वौ। नासिकयोर्द्वौ। चक्षुषोर्द्वौ। कर्णयोर्द्वौ। मूर्ध्नि सप्त। आधारपीठमुख्यसर्वपीठदेवताभ्यो नमः। देहे त्रिविधमात्रादेवताभ्यो नमः। वह्निमण्डलाय नमः। सूर्यमण्डलाय नमः। सोममण्डलाय नमः। सर्वशक्तिकमलासनाय नमः। ततो ध्यानम्—

हृत्पद्ममध्ये पुरुषं पुराणं सत्यात्मकं सर्वजगत्स्वरूपम्।
ध्यायामि नित्यं परमात्मसंज्ञं चिद्रूपमेकं प्रणवार्थतत्त्वम्॥

इति ध्यात्वा घण्टावत्साग्रं प्रणवमष्टाविंशतिवारं जपेत्। भूरित्यस्य विश्वामित्रर्षिरग्निर्देवता गायत्री छन्दः श्वेतो वर्णः षड्जस्वरः पृथिवी श्रीः शक्तिराग्निवेश्यं गोत्रं शब्दस्तत्त्वं विततमुद्रा प्राणजनितपापोपशमनाय न्यासे विनियोगः। ॐभूः पद्भ्यां नमः। भुव इत्यस्य जमदग्निर्ऋषिर्वायुर्देवतो ष्णिक्छन्दः श्यामवर्ण ऋषभः स्वरः आपो बीजं कीर्तिः शक्तिः काश्यपसगोत्रं स्पर्शस्तत्त्वं समाञ्जलिकमुद्राऽपानजनितपापोपशमनार्थे न्यासे विनियोगः। ॐभुवः जानुभ्यां नमः। स्वरित्यस्य भरद्वाजर्षिः सूर्यो देवताऽनुष्टुप् छन्दः पीतो वर्णो गान्धारः स्वरस्तेजो बीजं माया शक्तिर्गौतमसगोत्रं रूपं तत्त्वं शकटमुद्रा व्यानजनितपापोपशमनार्थे न्यासे विनियोगः। ॐस्वः गुह्याय नमः। मह इत्यस्य गौतमर्षिर्बृहस्पतिर्देवता बृहती छन्दः पिशङ्गवर्णो मध्यम स्वरो वायुर्बीजं धृतिः शक्तिराङ्गिरसगोत्रं रसस्तत्त्वं विस्तृतमुद्रोदानजनितपापोपशमनार्थे न्यासे विनियोगः। ॐ महः नाभ्यै नमः। जन इत्यस्यात्रिर्ऋषिर्वरुणो देवता पङ्क्तिश्छन्दो नीलवर्णः पञ्चमस्वरोऽकारो बीजं मेधा शक्तिर्भार्गवसगोत्रं गन्धस्तत्त्वं यमपाशमुद्रा समानजनितपापोपशमनार्थे न्यासे विनियोगः। ॐ जनः हृदयाय नमः। तप इत्यस्य वसिष्ठ ऋषिरिन्द्रो देवता त्रिष्टुप्छन्दो

लोहितवर्णो धैवतः स्वरो दिग्बीजं स्मृतिः शक्तिः कौशिकसगोत्रं मनस्तत्वं ग्रथितमुद्रा मनोजनितपापोपशमनार्थे न्यासे विनियोगः । ॐ तपः कण्ठाय नमः। सत्यमित्यस्य कश्यप ऋषिर्विश्वे देवा देवता जगती छन्दः कृष्णवर्णो निषादस्वर आत्मा बीजं वाक् शक्तिर्वसिष्ठसगोत्रं बुद्धिस्तत्वं व्यापकमुद्रा बुद्धिजनितपापोपशमनार्थे न्यासे विनियोगः । ॐ सत्यं मूर्ध्ने नमः। तत्सवितुरित्यस्या गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री छन्दोऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयं रुद्रो ललाटं पृथ्वी योनिः त्रैलोक्यं चरणा वरेणीति बीजं यामिति शक्तिर्यादिति कीलकं त्रिपदा गायत्री सकलपापक्षयार्थे न्यासे विनियोगः। शिरसि विश्वामित्रर्षये नमः । मुखे गायत्रीछन्दसे नमः । हृदि सवितृदेवतायै नमः। ॐ तत्सवितुर्ब्रह्मात्मनेऽङ्गुष्ठाभ्यां नमः । ॐ वरेण्यं विष्ण्वात्मने तर्जनीभ्यां स्वाहा। ॐ भर्गो देवस्य रुद्रात्मने मध्यमाभ्यां वषट् : ॐ धीमहि ईश्वरात्मनेऽन मिकाभ्यां हुम् । ॐ धियो यो नः सदाशिवात्मने कनिष्ठिकाभ्यां वौषट्। ॐ प्रचोदयात्सत्यात्मने करतलकरपृष्ठाभ्यां ( अस्त्राय ) फट् । एवं हृदयादि ।

अथ चरणन्यासः । गायत्र्या अनुष्टुप्चरणानामाग्निवायुकण्वा ऋषयः ब्रह्मविष्णुमहेश्वरा देवता गायत्र्युष्णिक्त्रिष्टुभश्छन्दांसि चरणन्यासे विनियोगः। ॐ भूस्तत्सवितुर्वरेण्यं भूरग्नये पृथिव्यै ब्रह्मणे लोकत्रयात्मने पादाभ्यां नमः। ॐ भुवः भर्गो देवस्य धीमहि भुवोऽन्तरिक्षाय वायवेऽन्तारिक्षात्मने हृदयाय नमः। ॐ स्वः धियो यो नः प्रचोदयात् । स्वरादित्याय महेश्वराय प्रणवत्रयात्मने शिरसे स्वाहा।

यथाङ्गुलिपर्वसु वर्णन्यासः। ॐ तद्दक्षिणतर्जन्यै प्रथमपर्वणे नमः। ॐ स दक्षिणतर्जन्यै द्वितीयपर्वणे नमः । ॐ वि दक्षिणतर्जन्यै तृतीयपर्वणे नमः। ॐ तु दक्षिणमध्यमायै प्रथमपर्वणे नमः। ॐ वं दक्षिणमध्यमायै द्वितीयपर्वणे नमः। ॐ रे दक्षिणमध्यमायै तृतीयपर्वणे नमः । ॐ णि दक्षिणानामिकायै प्रथमपर्वणे नमः। ॐ यं दक्षिणानामिकायै द्वितियपर्वणे नमः। ॐ

म दक्षिणानामिकायै तृतीयपर्वणे नमः। ॐ र्गो दक्षिणकनिष्ठिकायै प्रथमपर्वणे नमः। ॐ दे दक्षिणकनिष्ठिकायै द्वितीयपर्वणे नमः। ॐ व दक्षिणकनिष्ठिकायै तृतीयपर्वणे नमः। ॐ स्य वामतर्जन्यै प्रथमपर्वणे नमः। ॐ धी वामतर्जन्यै द्वितीयपर्वणे नमः। ॐ म वामतर्जन्यै तृतीयपर्वणे नमः। ॐ हि वाममध्यमायै प्रथमपर्वणे नमः। ॐ धि वाममध्यमायै द्वितीयपर्वणे नमः। ॐ यो वाममध्यमायै तृतीयपर्वणे नमः। ॐ प्रो वामानामिकायै प्रथमपर्वणे नमः। नो वामानामिकायै द्वितीयपर्वणे नमः। ॐ यो वामानामिकायै तृतीयपर्वणे नमः। ॐ चो वामकनिष्ठिकायै प्रथमपर्वणे नमः। ॐ द वामकनिष्ठिकायै द्वितीयपर्वणे नमः। ॐ याद्वामकनिष्ठिकायै तृतीयपर्वणे नमः।

अथाङ्गुलिन्यासः। ॐ तद्दक्षिणाङ्गुष्ठाय नमः। ॐ सवितुर्दक्षिणतर्जन्यै नमः। ॐ वरेण्यं दक्षिणमध्यमायै नमः। ॐ भर्गो दक्षिणानामिकायै नमः। ॐ देवस्य दक्षिणकनिष्ठिकायै नमः। ॐ धीमहि वामाङ्गुष्ठाय नमः। ॐ धियो वामतर्जन्यै नमः। ॐ यो वाममध्ययायै नमः। ॐ नो वामानामिकायै नमः। ॐ नो वामानामिकायै नमः। ॐ प्रचोदयाद्वामकनिष्ठिकायै नमः।

अथ पदन्यासः। दशानां गायत्रीपदानामग्निवायुसूर्यवरुणप्रजापतिब्रह्महंसान्तर्यामिमहादेवशातातपा ऋषयो ब्रह्मविष्णुमहेश्वरवरुणयमेन्द्रार्यमशिवपर्जन्यविश्वेदेवा देवता गायत्र्युष्णिगनुष्टुब्जगतीबृहतीपङ्क्त्यश्छन्दांसि शेषाणां चतुर्णां पदानां गायत्री छन्दः पदन्यासे विनियोगः। ॐ तत्पादाभ्यां नमः। ॐ सावितुर्जङ्घाभ्यां नमः। ॐ वरेण्यं कट्यै नमः। ॐ भर्गो नाभ्यै नमः। ॐदेवस्य हृदयाव नमः। ॐ धीमहि कण्ठाय नमः। ॐ धियो मुखाय नमः। ॐ यो नेत्राभ्यां नमः। ॐ नो ललाटाय नमः। ॐ प्रचोदयान्मूर्ध्ने नमः।

अथाक्षरन्यासः। ॐ तकारस्य वसिष्ठ ऋषिरग्निर्देवता गायत्री छन्द उदात्तः स्वरश्चम्पकवर्णः पृथ्वी तत्त्वम्। अं बीजं सह शक्तिः सुमुखमुद्रा पातकशमनार्थे न्यासे विनियोगः। ॐ त पदाभ्यां नमः [ १ ]। ॐत्सकारस्य भरद्वाज ऋषिर्वायुर्देवतोष्णिकछन्दः स्वरितस्वसोऽतसीपुष्पवर्ण आपस्तत्वम् ईं

वजिं प्रभावती शक्तिः संपुटमुद्रोपपातकशमनार्थे न्यासे विनियोगः । ॐ ल गुल्फाभ्या नमः [ २ ] । ॐ विकारस्य गौतम ऋषिः सूर्यो देवताऽनुष्टुप्छन्दोऽनुदात्तः स्वरः कपिलो वर्णस्तेजस्तत्वम् उं बीजं नित्या शक्तिर्विततमुद्रा महापातकशमनार्थे न्यासे विनियोगः । ॐ विजङ्घाभ्यां नमः [ ३ ] । ॐ तुकारस्य भृगुर्ऋषिर्विष्णुर्देवता बृहती छन्द उदात्तस्वर इन्द्रनीलाभो वर्णो वायुस्तत्वम् ऋं बीजं शोभना शक्तिर्विस्तृतमुद्रा ग्रहरोगशमनार्थे न्यास विनियोग । ॐ तु जानुभ्यां नमः [ ४ ] । ॐवकारस्य शाण्डिल्य ऋषिरर्यमा देवता पङ्क्तिश्छन्द उदात्तस्वरोऽग्न्याभो वर्ण आकाशस्तत्वं लृं बीजप्रजा शक्तिर्द्विमुखमुद्रा भ्रूणहत्यापापक्षयार्थे न्यासे विनियोगः । ॐ वं ऊरुभ्य नमः [ ५ ] । ॐ रेकारस्य लोहित ऋषिरिन्द्रो देवता त्रिष्टुप्छन्दः स्वरितां स्वरः स्फटिकाभो वर्णो गन्धस्तत्वम् ऐंबीजं भद्रा शक्तिस्त्रिमुखमुद्राऽगम्यागमनपापक्षयार्थे न्यासे विनियोगः । ॐ रे गुह्याय नमः [ ६ ] । ॐ णिकारस्य गर्ग ऋषिविश्वे देवा देवता जगती छन्द उदात्तस्वरो विद्युदाभो वर्णो रसस्तत्वम् । ऐंबीजं विमला शक्तिश्चतुर्मुखमुद्राऽभक्ष्यभक्षणजानितपापक्षयार्थे न्यासे विनियोगः । ॐ णि वृषणाभ्यां नमः [ ७ ] । ॐ यकारस्य शंभर्ऋषिः पर्जन्यो देवता प्रकृतिश्छन्दोऽनुदात्तस्वरस्तारकाभो वर्णो रूपं तत्वम् ॐ बीजं प्रभावती शक्तिः पञ्चमुखमुद्रा पुंवधपापक्षयार्थे न्यासे विनियोगः । ॐ य कटिभ्यां नमः [ ८ ]। ॐ भकारस्य सनत्कुमार ऋषिरिन्द्रो देवता सत्यं छन्द उदात्तस्वरो मेघाभो वर्णः स्पर्शस्तत्वम् औंबीजं जया शक्तिः षण्मुखमुद्रा गुरुवधपापक्षयार्थे न्यासे विनियोगः । ॐ भनाभ्यै नमः [ ९ ] । ॐ र्गोकारस्य सत्यवानृषिर्गन्धर्वो देवता विराट्छन्दः स्वरितः स्वरो रक्तो वर्णः शब्दस्तत्वम् अंबीजं प्रभावती शक्तिरधोमुखमुद्रा गोवधपापक्षयार्थे न्यासे विनियोगः । ॐ र्गो जठराय नमः [ १० ] ॐ देकारस्य गन्धर्व ऋषिः सत्यो देवता विराट्छन्दोऽनुदात्तस्वरो मरकताभो वर्णो वाक् तत्वम् अःकारो बीजं मल्हादिनी शक्तिर्व्यापकाञ्जलिकमुद्रा स्त्रीवधपापक्षयार्थे न्यासे विनियोगः । ॐ दे स्तनाभ्यां नमः [ ११ ] । ॐवकारस्य कश्यप ऋषिर्मित्रावरुणौ देवता अक्षपङ्क्तिश्छन्द उदात्तस्वरः शुक्लो वर्णो हस्तौ

तत्वं कं बीजं कान्ता शक्तिः शकटमुद्रा वाग्दोषत्यादिपापक्षयार्थं न्यासे विनियोगः ॐ व हृदयाय नमः [ १२ ]। ॐ सकारस्य कश्यप ऋषिस्त्वष्टा देवता कात्यायनं छन्दः स्वारितः स्वरः काञ्चनाभो वर्ण उपस्थं तत्वं चं बीजं जिह्वा शक्तिर्यमपाशमुद्रा ग्रामकौटिल्यपापक्षयार्थे न्यासे विनियोगः। ॐ स्य कण्ठाय नमः ( १३ )। ॐ धीकारस्यात्रिर्ऋषिर्वसवो देवता विराट्पङ्क्तिश्छन्दः प्रचयः स्वरः कुन्दाभो वर्णः पायुस्तत्वं टं बीजं सरस्वती शक्तिर्ग्रथितमुद्रा पितृवधपापक्षयार्थे न्यासे विनियोगः। ॐ धी मुखाय नमः [ १४ ] ॐ मकारस्य विष्णुर्ऋषिर्मरुतो देवता पङ्क्तिश्छन्दः प्रचयस्वरः पद्माभवर्णः पादौ तत्वं तं बीजं कात्यायनी शक्तिरुल्मुखोल्मुखमुद्रा सर्वजन्मार्जितपापक्षयार्थे न्यासे विनियोगः। ॐ म तालुने नमः ( १५ )। ॐ हिकारस्य पराशर ऋषिस्त्वष्टा देवताऽक्षरपङ्क्तिश्छन्दः प्रचयः स्वरः शङ्खाभो वर्णः श्रोत्रं तत्वं पं बीजं विश्वरूपा शक्तिः प्रलम्बमुद्रा प्रतिग्रहार्जितपापक्षयार्थे न्यासे विनियोगः। ॐ हि नासापुटाय नमः ( १६ )। ॐ विकारस्य पुण्डरीक ऋषिराङ्गिरसो देवता-कात्यायनं छन्द उदात्तस्वरः पाण्डुरो वर्णस्त्वक् तत्वं यं बीजं विभूतिः शक्तिर्मुष्टिकमुद्रिका मातृवधपापक्षयार्थे न्यासे विनियोगः। ॐ धि नेत्राभ्यां नमः (१७)। ॐ योकारस्य क्रमुक ऋषिर्विश्वे देवा देवता जगती छन्दोऽनुदात्तस्वरो रुक्माभो वर्णश्चक्षुस्तत्वं रं बीजं ज्ञाना शक्तिर्मत्स्यमुद्रा जन्मार्जितपापक्षयार्थे न्यासे विनियोगः। ॐ यो भ्रुकुटिभ्यां नमः ( १८ )। ॐ योकारस्य दक्ष ऋषिर्विश्वे देवा देवता जगती छन्द उदात्तस्वरो विद्युदाभो वर्णो घ्राणं तत्वं लं बीजं गान्धारशक्तिः कूर्ममुद्रा सप्तजन्मार्जितपापक्षयार्थे न्यासे विनियोगः। ॐ यो ललाटाय नमः ( १९ )। ॐ नःकारस्याङ्गिरा ऋषिर्भर्गो देवता बृहती छन्दः स्वारितः स्वरः सूर्याभो वर्णो जिह्वा तत्वं वं बीजं रतिः शक्तिर्वराहमुद्रा विरिञ्चिपदप्राप्त्यर्थे न्यासे विनियोगः। ॐ नः पूर्ववक्त्राय नमः ( २० )। ॐ प्रकारस्य कार्तिकेय ऋषिः शर्वो देवता भुवश्छन्दः प्रचयस्वर इन्द्रनीलाभो वर्णो मनस्तत्वं शं बीजं प्रीतिः शक्तिः सिंहाक्रान्तमुद्रा विष्णुपदप्राप्त्यर्थे न्यासे विनियोगः। ॐ प्र दक्षिणवक्त्राय नमः ( २१ )। ॐ चोकारस्य रुद्र ऋषि-

ब्रह्मा देवता स्वराट्छन्दोऽनुदात्तस्वरः कुङ्कुमाभो वर्णोऽहंकारस्तत्वं वं बीजं पद्मालया शक्तिर्महाक्रान्तमुद्रा रुद्रपदप्राप्त्यर्थे न्यासे विनियोगः । ॐ चो पश्चिमवक्त्राय नमः ( २२ ) । ॐ दकारस्यागस्त्य ऋषिर्ब्रह्मा देवता सत्यं छन्द उदात्तस्वरः कुङ्कुमाभवर्णश्चित्तं तत्वं सं बीजं विलासिनी शक्तिर्मुद्गरमुद्रा सगुणब्रह्मपदप्राप्त्यर्थे न्यासे विनियोगः । ॐ द उत्तरवक्त्राय नमः ( २३ )। ॐ याकारस्य विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः स्वरितः स्वरो रक्तवर्णोऽव्यक्तं तत्वं हं बीजं भल्लूका शक्तिः पल्लवमुद्रा परमपदप्राप्त्यर्थे न्यासे विनियोगः । ॐ या मूर्ध्ने नमः ( २४ )। तकारव्यञ्जनं सर्वाङ्गे न्यसामि ( २५ )।

अथ मैत्रतत्वात्मवर्णन्यासः । वामदक्षपादाङ्गुलिमूलेषु ॐ भूः भुवः स्वः महः जनः तपः सत्यं तं पृथ्वीतत्वात्मने नमः । वामदक्षगुल्फयोः ८ त्सं जलतत्वात्मने नमः । वामदक्षजान्वोः ८ विं वह्नितत्वात्मने नमः। वामदक्षपादमूलयोः ८ तुं वायुतत्वात्मने नमः । वामदक्षकराङ्गुलिमूलेषु ८ वँ खतत्वात्मने नमः । वामदक्षिणमणिबन्धयोः ८ रेंगन्धतत्वात्मने नमः । वामदक्षकूर्परयोः ८ णिं रसतत्वात्मने नमः । वामदक्षबाहुमूलयोः ८ यं रूपतत्वात्मने नमः। ध्वजे ८ मं स्पर्शतत्वात्मने नमः । नाभौ ८ गों शब्दतत्वात्मने नमः । हृदि ८ दें वाक्तत्वात्मने नमः । कण्ठे ८ वम् उपस्थतत्वात्मने नमः । आस्ये ८ स्यं पायुतत्वात्मने नमः । नासायां ८ धीं पाणितत्वात्मने नमः । कपोलयोः ८ मं पादतत्वात्मने नमः। नेत्रयोः ८ हिं प्राणतत्वात्मने नमः । कर्णयोः ८ विं त्वक्तत्वात्मने नमः । भ्रुवोः ८ यों चक्षुस्तत्वात्मने नमः । शिरासि ८ यों जिह्वातत्वात्मने नमः। पश्चिमास्ये ८ नः घ्राणतत्वात्मने नमः । उदगास्ये ८ पं मनस्तत्वात्मने नमः । दक्षिणास्ये ८ चोम् अहंकारतत्वात्मने नमः । पूर्वास्ये ८ दं बुद्धितत्वात्मने नमः ऊर्ध्वास्ये ८ यात्प्रकृतितत्वात्मने नमः । इति मैत्रतत्वात्मवर्णन्यासः ।

अथ वैष्णवतत्वात्मवर्णन्यासः । ध्वजे तं चित्ततत्वात्मने नमः । नाभौ त्सं धीतत्वात्मने नमः । हृदि विं प्राणतत्वात्मने नमः । कण्ठे तुं निवृत्ति-तत्वात्मने नमः । वामपादाग्रे वैं घ्राणतत्वात्मने नमः । अङ्गुलिमूलेषु रें जिह्वातत्वात्मने नमः । गुल्फे णिं चक्षुस्तत्वात्मने नमः । जानौ यं त्वक्तत्वा-त्मने नमः । पादमूले भं श्रोत्रतत्वात्मने नमः । दक्षपादाग्रे र्गो पादत-त्वात्मने नमः । अङ्गुलिमूलेषु दें पाणितत्वात्मने नमः । गुल्फे वं पायुतत्वात्मने नमः । जानौ स्यम् उपस्थतत्वात्मने नमः । पादमूले धीं वाक्सत्वात्मने नमः । वामकराग्रे मं गन्धतत्वात्मने नमः । अङ्गुलिमूलेषु हिं रसतत्वात्मने नमः । मणिबन्धे धिं रूपत-त्वात्मने नमः । कूर्परे यों स्पर्शतत्वात्मने नमः । बाहुमूले यों शब्दतत्वा-त्मने नमः । दक्षिणकराग्रे नः पृथ्वीतत्त्वात्मने नमः । अङ्गुलिमूलेषु पं जलतत्वात्मने नमः । मणिबन्धे चों वह्नितत्वात्मने नमः । कूर्परे दं वायुत-त्वात्मने नमः । बाहुमूले यात् खतत्वात्मने नमः । हृदि भूः भूतत्वात्मने नमः । वामांसे भुवः सोमतेजस्तत्वात्मने नमः । मुखे स्वः सूर्यतेजस्तत्वा-त्मने नमः । दक्षांसे महः वह्नितेजस्तत्वात्मने नमः । वामनेत्रे जनः अनि-रुद्धतत्वात्मने नमः । दक्षिणनेत्रे तपः प्रद्युम्नतत्वात्मने नमः । भाले सत्यं संकर्षणतत्वात्मने नमः । ब्रह्मरन्ध्रे वासुदेवतत्वात्मने नमः । [ प्रणवः सर्वत्राऽऽदौ ] । इति वैष्णवतत्वात्मवर्णन्यासः ।

अथ शिवतत्त्वात्मवर्णन्यासः । वामपादाग्रे ह्सौं भूः भुवः स्वः महः जन-तपः सत्यं तं पृथिवीतत्वात्मने नमः । अङ्गुलिमूलेषु ८ तं जलतत्वात्मने नमः । गुल्फे ८ सं वह्नितत्वात्मने नमः । जानौ विं ८ वायुतत्वात्मने नमः । पादमूले तुं खतत्वात्मने नमः । एवं दक्षिणपादाग्रे ८ रं गन्धतत्वात्मने नमः । अङ्गुलिमूलेषु ८ वं रसतत्त्वात्मने नमः । गुल्फे ८ रें रूपतत्वात्मने नमः । जानौ ८ णिं स्पर्शतत्वात्मने नमः । पादमूले ८ यं शब्दतत्वात्मने नमः । वामकराग्रे ८ भं पादतत्त्वात्मने नमः । अङ्गुलिमूलेषु ८ रं पाणित-त्वात्मने नमः । मणिबन्धे ८ गों पायुतत्वात्मने नमः । कूर्परे ८ देम्

उपस्थतत्त्वात्मने नमः । बाहुमूले ८ वं वाक्तत्त्वात्मने नमः । एवं दक्षिणकराग्रे ८ सिं घ्राणतत्त्वात्मने नमः । अङ्गुलिमलेषु ८ यं जिह्वातत्त्वात्मने नमः । प्रणिबन्धे ८ धीं चक्षुस्तत्त्वात्मने नमः । कूर्परे ८ मं त्वक्तत्त्वात्मने नमः । बाहुमूले ८ हिं श्रोत्रतत्त्वात्मने नमः । आधारे ८ धिम् अहंकारतत्त्वात्मने नमः । स्वाधिष्ठाने ८ यों बुद्धितत्त्वात्मने नमः । मणिपूरे ८ यों मनस्तत्त्वात्मने नमः । अनाहते ८ नः प्रकृतितत्त्वात्मने नमः विशुद्धौ ८ पं पुरुषतत्त्वात्मने नमः । आज्ञाचक्रे ८ रं नियतितत्त्वात्मने नमः । बिन्दौ ८ चों कालतत्त्वात्मने नमः । रोधिन्यां ८ दं रागतत्त्वात्मने नमः । नादान्ते ८ यां विद्यातत्त्वात्मने नमः । व्यापिकायां ८ तं कालतत्त्वात्मने नमः । उन्मन्यां ८ अं मायातत्त्वात्मने नमः । पश्चिमास्ये ८ इं शुद्धविद्यातत्त्वात्मने नमः । उदगास्ये ८ उम् ईश्वरतत्त्वात्मने नमः । दक्षिणास्ये ८ एं सदाशिवतत्त्वात्मने नमः । पूर्वास्ये ८ ॐ शक्तितत्त्वात्मने नमः । ऊर्ध्वास्ये ८ अं शिवतत्त्वात्मने नमः । इति शिवतत्त्वात्मवर्णन्यासः । अत्र केचन मैत्रतत्त्वादिशिवतत्त्वान्तन्यासत्रयं कृताकृतमिति वदन्ति । नेति बहवः । सर्वप्रकाशकसूर्यवाच्यत्वात्तत्पीठस्थितत्वाच्चेति । अथ शिरोन्यास–

गायत्रीशिरसो ब्रह्मा ऋषिः परमात्मा देवता दैवी गायत्री छन्दः प्रचयः स्वरो दीप्तिः कर्णस्तेजस्तत्त्वं जया शक्तिरमृतं बीजं व्यापकमुद्रा मानसादिपापक्षयार्थे न्यासे विनियोगः । ॐ आपः स्तनाभ्यां नमः । प्रणवादिता सर्वत्र । ज्योतिर्नेत्राभ्यां नमः । रसो जिह्वायै नमः । अमृतं ललाटाय नमः । ब्रह्म भूर्भुवः सु रों शिरसि ।

अथ तुरीयपादसहितगायत्रीन्यासः । त्रिपदगायत्र्या विश्वामित्र ऋषिश्चतुर्थपादस्य विमल ऋषिर्गायत्री छन्दो ब्रह्मविष्णुरुद्रपरमात्मानो देवतास्तत्सवितुर्वरेण्यमिति बीजं भर्गो देवस्य धीमहीति शक्तिर्धियो यो नः प्रचोदयादिति कीलकं तुरीयपादयुक्ता गायत्री द्वात्रिंशदक्षरा चतुष्पदाऽष्टकुक्षिः सप्तशीर्षाऽभीष्टफलप्राप्त्यर्थं न्यासे विनियोगः । परो हृदयाय नमः । रजसे शिरसे स्वाहा । असावदों शिखायै वषट् । परो रजसे कवचाय हूम् । असावदों नेत्रत्रयाय

वौषट् । रजसेऽसावदोमस्त्राय फट् । ततः प्रणवादिसप्तव्याहृतिपूर्विकां गायत्रीं सशिरस्कां तुरीयपादसहितां गुरूक्तरीत्याच्चार्य मस्तकादिपादान्तं पादादिमस्तकान्तं दशधा व्यापकं कुर्यात् । केचन तुरीयपादेन प्रणवाद्येकैकव्याहृतिसंपुटितेन सप्त व्यापकानि कुर्वन्ति । अथान्तर्यजनम् ।

तत्र स्वशरीरमंसद्वयोरुद्वयकल्पितपादचतुष्टयं मुखनाभिपार्श्वद्वयकल्पितगात्रचतुष्टयं रत्नसिंहासनं विभाव्य हृदि हस्तं दत्त्वा मण्डूकादिपीठदेवताः पूजयेत् । तद्यथा——मूलाधारे महाकालाय रक्तवर्णाय मण्डूकाय नमः । तदुपरि स्वाधिष्ठानपर्यन्तं पञ्चवक्त्राय दशभुजाय रक्तवर्णाय वामदक्षिणपार्श्वस्थाय कालाग्निरुद्राय नमः । तदुपरि नाभिपर्यन्तं बन्धूकरुचिरायै मूलप्रकृत्यै नमः । तदुपरि हृदयपर्यन्तं शरच्चन्द्रप्रभायै पङ्कजधारिण्या आधारशक्त्यै नमः । तदुपरि

हृदयपर्यन्तं शरच्चन्द्रप्रभायै पङ्कजधारिण्या आधारशक्त्यै नमः । तदुपरि

कूर्माय नमः । अनन्ताय नमः । वराहाय नमः । पृथिव्यै नमः । सुधासमुद्राय नमः । श्वेतद्वीपाय नमः । स्वर्णपर्वताय नमः । कल्पवृक्षोद्यानाय नमः । मणिमयभूमिकायै नमः । रत्नमण्डपाय नमः । रत्नच्छुरितहेमसिंहासनाय नमः । ततः सिंहासनस्य पादगात्ररूपत्वेन वामांसे रक्तवर्णाय वृषरूपाय धर्माय नमः । वामोरौ श्यामवर्णाय सिंहरूपिणे ज्ञानाय नमः । दक्षोरौ पीतवर्णाय नररूपिणे वैराग्याय नमः । दक्षांसे नीलवर्णाय गजरूपिण ऐश्वर्याय नमः हृदि योगपीठस्य मुखे शूद्ररूपाय कृष्णवर्णाय खड्गचर्मधराय धर्माय नमः । वामपार्श्वे ईश्वररूपायान्धकारवर्णायाज्ञानाय नमः । नाभावुन्मत्तपिशाचरूपवर्णायवैराग्याय नमः । दक्षपार्श्वे स्त्रीशूद्ररूपाय मुक्तकेशाय नग्नायानैश्वर्याय नमः । हृद्यनन्ताय नमः । तदुपर्यानन्दकन्दाय नमः । संविन्नालाय नमः । सर्वतत्त्वात्मकाय नमः । प्रकृतिमयपत्रेभ्यो नमः । विकारमयकेसरेभ्यो नमः । पञ्चाशद्वर्णपीठाद्यकर्णिकायै नमः । तत्कर्णिकायां सूर्यमण्डलाय नमः । तन्मण्डलेऽग्न्यादिप्रदक्षिणवृचाकारेण कंभं तपिनीकलायै नमः । खंबं तापिनीकलायै नमः । गंफं धूम्रकलायै नमः । घंपं मरीचिकलायै नमः । ङंनं ज्वालिनीकलायै नमः ।

चंधं रुचिकलायै नमः । छंदं सुषुम्नाकलायै नमः । जंथं भोगदाकलायै नमः । झंतं विश्वकलायै नमः । ञणं बोधिनीकलायै नमः । टंढं धारिणीकलायै नमः । ठंडं क्षमाकलायै नमः । इति न्यस्य विकारमयपद्मकेसरेषु सोममण्डलाय नमः । तन्मण्डले प्राग्वत् । अम् अमृतकलायै नमः । आं मानदाकलायै नमः । इं पूषाकलायै नमः । ईं तुष्टिकलायै नमः । उं पुष्टिकलायै नमः । ऊं रतिकलायै नमः । ऋं धृतिकलायै नमः, ॠं शशिनीकलायै नमः । ऌं चन्द्रिकाकलायः नमः । ॡं कान्तिकलायै नमः । एं ज्योत्स्नाकलायै नमः । ऐं श्रीकलायै नमः । ओं प्रीतिकलायै नमः । औम् अङ्गदाकलायै नमः । अं पूर्णाकलायै नमः । अः पूर्णामृतकलायै नमः । इति विन्यस्य प्रकृतिमयपद्मपत्रेषु ॐ वह्निमण्डलाय नमः । तन्मण्डले प्राग्वत् गं धूम्रार्चिःकलायै नमः । रम् ऊष्माकलायै नमः । लं ज्वलिनी कलायै नमः । वं ज्वालिनीकलायै नमः । शं विस्फुलिङ्गिनीकलायै नमः । षं सुश्रीकलायै नमः । सं सुरूपाकलायै नमः । हं कपिलाकलायै नमः । वामदक्षपार्श्वयोर्लं हव्यवाहकलायै नमः । क्षं कव्यवाहकलायै नमः । इति न्यसेत् । कर्णिकायां सं सत्त्वाय नमः । केसरेषु रं रजसे नमः । पत्रेषु तं तमसे नमः । आम् आत्मने नमः । ॐ अम् अन्तरात्मने नमः । पं परमात्मने नमः । सर्वपद्मे ह्रीं ज्ञानात्मने नमः । अष्टपत्रेषु वह्न्यादिप्रदक्षिणमध्ये रं दीप्तायै नमः । रीं सूक्ष्मायै नमः । रूं जयायै नमः । रें भद्रायै नमः । रैं विभूत्यै नमः । रों विमलायै नमः । रौम् अमोघायै नमः । रं विद्युतायै नमः । रः सर्वतोमुख्यै नमः । ॐब्रह्मविष्णुशिवात्मकाय सौरयोगपीठाय नम इति व्यापकं कुर्यादिति । समस्तं पीठं हृदि पूजयेदिति योगपीठन्यासः । अथ हृदयदेशे गायत्रीयन्त्रं विभावयेत्—

शक्तेर्बाह्यकृशानुकोणविलसद्भूरादिसत्कर्णिकं
वस्वस्रं स्वग्युग्मकेसरदलं वर्गैस्त्रिवर्णं मनोः ।
चूडायन्त्रतुरीयवेष्टितमिदं क्ष्माकोणताराङ्कितं
गायत्र्याः कथितं महःप्रभृतिभिर्यन्त्रं तु दीक्षाङ्कितम् ॥

तत्र देवीं ध्यायेत्—

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै-
र्युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगुलं हस्तैर्वहन्तीं भजे ॥

इति देहमये पीठे मूलदेवतां ध्यात्वा मानसैश्चन्दनाद्यैरुपचारैः पूजयेत् । तद्यथा—मूलमुच्चार्य ॐ लं पृथिव्यात्मने नारायणाय गन्धं परिकल्पयामि । मूलमुच्चार्य ॐ हम् आकाशात्मने वासुदेवाय पुष्पं परिकल्पयामि । मूलमुच्चार्य ॐ वं वाय्वात्मने संकर्षणाय धूपं परिकल्पयामि । मूलमुच्चार्य ॐ रम् अग्न्यात्मने प्रद्युम्नाय दीपं परिकल्पयामि । मूलमुच्चार्य ॐ वम् अमृतात्मनेऽनिरुद्धाय नैवेद्यं परिकल्पयामि । भोजनावसरे देवीं ध्यात्वा—

स्वाधिष्ठानगते कुण्डे त्रिकोणे वह्निमुज्ज्वलम् ।
चिद्रूपं प्रणवेनाथ तत्राहंतादिकं हुनेत् ।

स्वाधिष्ठानगते त्रिकोणकुण्डे चिद्रूपं ज्वलितं वह्निं भावयित्वा तस्मिन्प्रणवेनाहंकाराद्यष्टाविंशत्याहुतीर्हुनेत् । ताश्च यथा—ॐ अहंतां जुहोमि स्वाहा । एवमुत्तरत्र ।

अहंतां सत्यपैशुन्ये कामं क्रोधं मदं रुजम् ।
हिंसां नास्तिक्यमज्ञानमदयां दम्भकैतवे ॥
व्रीडत्वमनृजुत्वं च दारिद्र्यं शोकमत्सरौ ।
अक्षमां चामिताहारं भयं निद्रां सुखेतरम् ॥
अधैर्यं दुष्टसंचारं नीचसङ्गं त्वविद्यताम् ।
आसुरं भावमित्यष्टाविंशत्याहुतिभिर्हुनेत् ॥

ततः——पूजाहोमादिकं चैव यत्कृतं त्वदनुग्रहात् ।
तेन प्रीता भव त्वं भोः शुद्धं मे मानसं कुरु ॥

इत्याराध्य मूलाधारस्थकुण्डलिनीविद्युत्प्रकाशिकास्पष्टावीधिबिलगतामृतम-ण्डलनिर्गतसुधाधारया देवीं संतर्प्य किंचिन्मूलं जपित्वा–

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात्करे स्थिता ॥

इति देव्यै निवेद्य चतुर्विंशतिमुद्राः प्रदर्श्य तद्रूपमात्मानं ध्यायन्नुपरमेत । इत्यन्तर्यजनम् । ततो बाह्यपूजार्थं ताम्रादिपीठे चन्दनादिलिप्ते सुवर्णादिलेखन्या भूमौ वा चन्दनादिना पूजामण्डलमुद्धरेत् । तद्यथा–विंशत्यङ्गुलं समचतुरस्रं पीठं निर्माय तदन्तरेकाङ्गुलान्तरालरेखाचतुष्टयं पूर्वोद्धृतरेखाचतुष्टयस्पृष्टरेखाग्राहकं कृत्वा तदन्तरेपि तादृशं कुर्यादिति चतुरस्रत्रयं सत्त्वादिगुणमयं विदिक्स्थकोणाष्टकंदिक्स्थवथ्यिष्टकं षोडशस्थानयुतं कृत्वा तदन्तरेकाङ्गुलान्तरे समचतुरस्रं कृत्वा तस्य प्रतिरेखमेकैकाङ्गुलान्तराले पञ्चदश पञ्चदश चिह्नानि दत्त्वा तत्तत्पञ्चमचिह्नानुसारेण मध्ये विदिग्गतं चिह्नचतुष्टयं कृत्वा चिह्नाच्चिह्नरेखाचतुष्टयेन मध्यगतं षडङ्गुलं चतुरस्रं कृत्वैतद्बहिरेकैकाङ्गुलान्तरालं चतुरस्रत्रयं कृत्वा एवं कृते मध्यचतुरस्रतद्बाहिरेकाङ्गुलान्तरालं वीथीत्रयं तद्बहिर्द्व्यङ्गुलान्तराले वीथ्येकेति संपद्यते । तत्र द्व्यङ्गुलान्तरालवीथ्यन्तर्गतरेखां द्वादशाङ्गुलामेकादशचिह्नैरेकाङ्गुलान्तरालैः प्रतिपार्श्वं चिह्नयेत् । एवमेतद्बाह्यवीथ्यन्तरेऽपि पूर्वकृतैकादशचिह्नकोणाभिमुखानि प्रतिपार्श्वं त्रयोदश चिह्नानि कृत्वा ततो बाह्येरेखायां प्रतिपार्श्वं पञ्चदश चिह्नानि मध्यस्थानि प्रतिपार्श्वं त्रयोदश चिह्नान्यन्तर्गतरेखायां प्रतिपार्श्वमेकादश चिह्नान्येकैकाङ्गुलान्तरालानि भवन्ति । अथ मध्यस्थचिह्नपङ्क्तौ कोणाभिमुखचिह्नपारभ्य कोणाभिमुखचिह्नपर्यन्तमेकमेकं द्वयमेकमेकमङ्गुलं परित्यज्य प्रागायतं दक्षिणोत्तरपार्श्वद्वयरेखाद्वादशकमुदगायतं प्राक्पश्चिमपार्श्वद्वये रेखाद्वादशकं कृत्वा स्वाग्रवीथीस्थस्वदक्षिणरेखादाक्षिणाग्रं तदभिमुखं बाह्यद्वितीयचिह्ने संयोज्य तदुत्तराग्रमन्तर्गतप्रथमाचिह्ने संयोजयेत् । ततः पङ्क्तिप्रान्त्यद्वितीयरेखादाक्षिणाग्रमन्तर्गतद्वितीयचिह्ने संयोज्य तदुत्तराग्रं बाह्यपञ्चमचिह्ने संयोजयेत् । ततस्तृतीयरेखादाक्षिणाग्रं बाह्यषष्ठाचिह्ने संयोज्य तदुत्तराग्रमन्तर्गतपञ्चमचिह्ने संयोज्य ततश्चतुर्थरेखादाक्षिणाग्रमन्तर्गतसप्तमाचिह्ने संयोजयेत् । तदुत्तराग्रं

बाह्यदशमचिह्ने संयोजयेत् । ततः पञ्चमरेखादक्षिणाग्रं बाह्यैकदेश( कादश )चिह्ने संयोज्य तदुत्तराग्रमन्तर्गतदशमाचिह्ने संयोजयेत् । ततः षष्ठरेखादक्षिणाग्रमन्तर्गतै-कादशचिह्ने संयोज्य तदुत्तराग्रं बाह्यचतुर्दशचिह्ने संयोजयेत् । एवं प्रतिपार्श्वे द्वारचतुष्टयं शोभाष्टकमुपशोभाष्टकं कोणचतुष्टयं च भवति । ततस्तदन्तर्वर्थित्रियं बाह्यतो रेखात्रयान्तः कोणोभवती व्यङ्गुलचिह्नाभ्यां प्रतिकोणं चिह्नयेत् । तदस्त-दन्तरेखात्रयकोणपार्श्वयोर्बहिः प्रतिकोणमेकैकाङ्गुलान्तरालचिह्नाच्चिह्नद्वययुतं कृत्वा चिह्नाच्चिह्नरेखादानेन प्रत्येकं पादचतुष्टयगात्रचतुष्टयोपेतं पीठत्रयं भवति । ततः सर्वान्तश्चतुरस्रमध्ये मध्यमवष्टभ्य चतुरस्ररेखास्पृष्टास्पृष्टिकभ्रमणेन वृत्तं निष्पाद्य तदन्तर्व्यङ्गुलं भ्रामणेन द्वितीयं वृत्तं निष्पाद्य वृत्तद्वयान्तर्गतवीथ्यां सकेसरमष्ट-दलं कृत्वा विदिग्दलाग्रेभ्यश्चतुरस्रकोणावधितिर्यग्रेखाचतुष्टयेन स्थानादष्टकं कृत्वा तत्कर्णिकायां समत्रिरेखां योनिं चोद्धरेदिति यन्त्रोद्धारः । यदा सुवर्णादिना यन्त्रं क्रियते तदा विंशत्यङ्गुलमानापेक्षा नास्ति । तदुक्तं रुद्रयामले—

रत्नादिकविनिर्माणे स्वेच्छया परिकल्पयेत् ।

आदिशब्देन सुवर्णादि ग्राह्यम् । एवं यन्त्रं निर्माय ततो देशकालादि स्मृत्वा ब्रह्मविद्यायाः सावरणायाः सावित्र्या गायत्र्या कल्पोक्तफलावाप्तये पूजां करिष्य इति संकल्प्य कलशादिपात्रस्थापनं कुर्यात् । स्ववामे जलपूरितं कलशं स्थापयित्वा ॐ मं धर्मप्रददशकलात्मने ब्रह्मविद्याया गायत्र्याः पूजाकलशाधाराय नम इत्याधारं प्रतिष्ठाप्य तदुपरि हुंफडित्यस्त्रक्षालितम् अम् अर्थप्रदं द्वादशकला-त्मने कलशाय नम इति कलशं प्रतिष्ठाप्य उं कामप्रदषोडशकलात्मने सोममण्ड-लाय नम इति जले सोममण्डलं संपूज्य 'कलशस्य मुखे विष्णुः' इत्यादिना कलशं संपूज्य 'गङ्गे च यमुने चैव' इत्यनेन तीर्थान्यावाह्य गन्धादिनाऽलं-कृत्य कलशे धेनुमुद्रां प्रदर्श्य शङ्खपूजामारभेत । कलशाद्दक्षिणतो गन्धादिना मत्स्यमुद्रया त्रिकोणं वृत्तं चतुरस्रं मण्डलं कृत्वा शङ्खाधारमस्त्रक्षालितं मं धूम्रा-च्यादिधर्मप्रददशकलात्मने गायत्र्याः शङ्खाधाराय नम इत्याधारं प्रतिष्ठाप्य तत्र वह्निकलाः पूजयेत् । यं धूम्रार्चिषे नमः । रम् ऊष्मायै नमः । लं ज्वलिन्यै नमः । वं ज्वालिन्यै नमः । शं विस्फुलिङ्गिन्यै नमः । षं सुश्रियै नमः । सं

सुरूपायै नमः । हं कपिलायै नमः । ळं हव्यवाहायै नमः । क्षं कव्यवाहायै नम इति प्रणवाद्याः संपूज्य ॐ अं तपिन्याद्यर्थप्रदद्वादशकलात्मने गायत्र्याः शङ्खाय नम इति शङ्खं संपूज्य ॐ कंभं तापिन्यै नमः । खंबं तापिन्यै नमः । गंफं धूम्रायै नमः । घंपं मरीच्यै नमः । ङंणं ज्वालिन्यै नमः । चंधं रुच्यै नमः । छंदं सुषुम्नायै नमः । जंथं भोगदायै नमः । झंतं विश्वायै नमः । ञंणं बोधिन्यै नमः । टंढं धारिण्यै नमः ठंडं क्षमायै नम इत्यक्षतैः संपूज्य क्रोमित्यङ्कुशमुद्रयाऽन्विताच्चन्द्रमण्डलात् 'गङ्गे च यमुने चैव' इत्यादिनाऽऽवाह्य क्षाद्यकारान्ताविलोममातृका विलोमाक्षरं मूलं च पठेत् । तद्यथा– ॐ क्षंळंहंसंषंशंवंलंरंयंमंभंबंफंपंनंधंदंथंतंणंढंडंठंटंञंझंजंझंजंछंचंङंघंगंखंकंअः अंऔं-ओंऐंएंॡंऌंॠंऋंऊंउंईंइंआं अंतंयादंचोंमंनःयोंयोंविंहिंमंनींस्यंवंदेंगोंमंण्यंरेंवंतुं चिं-त्संतम् इति । ततः शुद्धतोयेन शङ्खमापूर्य ॐ अमृतादिकामप्रदषोडशकलात्मने गायत्र्याः शङ्खाय नम इति शङ्खे पुष्पं दत्त्वाऽग्न्यादिप्रादाक्षिण्येन ॐ अम् अमृतकलायै नमः । आं मानदायै नमः । इं पूषायै नमः । ईं तुष्टयै नमः । उं पुष्टयै नमः । ऊं रत्यै नमः । ऋं धृत्यै नमः । ॠं शशिन्यै नमः । ऌं चन्द्रिकायै नमः । ॡं कान्त्यै नमः । एं ज्योत्स्नायै नमः । ऐं श्रियै नमः । ओं प्रीत्यै नमः । औम् अङ्गदायै नमः । अं पूर्णायै नमः । अः पूर्णामृतायै नम इति संपूज्य शङ्खयोनिधेनुमुद्राः प्रदर्श्य गन्धपुष्पाणि प्रक्षिप्य तदुदकेनाग्नीशासुरवायव्यमध्ये दिक्षु च षडङ्गैः संकली-कृत्य हन्मन्त्रेण संपूज्य मत्स्यमुद्रया छादयन्मूलमेकादशवारं प्रजप्य तज्जलं देवतारूपं विभाव्यास्त्रेण संरक्ष्य कवचेनावगुण्ठ्य मत्स्यमुद्रया रोधयेत् । ततः—

> पाञ्चजन्य निजध्वानध्वस्तपातकसंचयं ।
> त्राहि मां नरकाद्घोराद्घोरसंसारतापितम् ॥

इति प्रार्थयेत् । इति शङ्खार्घ्यपात्रस्थापनम् । ततः स्वदक्षिणाग्रे प्रागुक्तत्रिकोणमण्डले साधारं ताम्रादिमयं प्रोक्षणीपात्रं संस्थाप्य शुद्धोदकेनाऽऽपूर्य हन्मत्रेण संपूज्य तत्राघ्यर्जलबिन्दुं दत्त्वा मत्स्यमुद्रयाऽऽच्छादयेत् । एवमेवार्घ्यस्यो-

ततः पाद्याचमनीयपात्रे स्थापयेत् । अर्घ्यपात्रे कुशाग्रतिलसर्षपदूर्वाः । प्रोक्षणी-पात्रे कुशगन्धपुष्पाणि । पाद्यपात्रे श्यामाकदूर्वाविष्णुक्रान्ताः । आचमनीयपात्रे जातीलवङ्गकङ्कोलचूर्णं निक्षिपेत् । इति पात्राणि ( सं ) स्थाप्य ततः शङ्खा-त्प्रोक्षणीपात्राच्च किंचिज्जलमुद्धृत्याऽऽत्मानं पूजोपकरणानि च मूलेन प्रोक्षयेत् । ततः पीठोत्तरभागे गुरुभ्यो नमः । परमगुरुभ्यो नमः । परमेष्ठिगुरुभ्यो नमः । परात्परगुरुभ्यो नम इति पूजयेत् । पीठाद्दक्षिणभागे गणपतये नमः । दुर्गायै नमः । क्षेत्रपालाय नमः । वास्तोष्पतये नम इति पूजयेत् । ततः पञ्चरङ्गा-न्विताष्टदलोपेतपद्मपीठे मण्डूकादिपीठदेवताः पूजयेत् । पूजाचक्राधारादधो मण्डू-काय नमः । कालाग्निरुद्राय नमः । ॐ कूर्माकारशिलारूढायै शरच्चन्द्रनिभायै पद्मद्वयकराया आधारशक्त्यै नमः । तन्मूर्ध्नि ॐ नीलवर्णाय कूर्माय नमः । तदुपरि ब्रह्मशिलासीनाय शुभ्रायानन्ताय नमः । तन्मूर्ध्नि धरणीधराय चक्रपाणये नमः । तदुपरि तमालश्यामलायै नीलोत्पलद्वयकरायै वसुमत्यै नमः । तस्यां रत्नद्वीपाय नमः । तस्मिन्मणिमण्डपाय नमः । तन्मध्ये कल्पतरुभ्यो नमः । तदधो रत्नवेदिकायै नमः । इति तत्तस्थानभावनया संपूज्य पूजाचक्राधारं सिंहासनत्वेन परिकल्प्य देवतात्ममध्ये प्राच्यङ्गीकारेण तदाग्नेयादिपादचतुष्टये प्रदक्षिणम् ॐ रक्तवर्णाय वृषरूपिणे धर्माय नमः । ॐश्यामाय सिंहरूपिणे ज्ञानाय नमः । ॐ पीतवर्णाय भूतरूपिणे वैराग्याय नमः । ॐ इन्द्रनील-वर्णाय गजरूपिण ऐश्वर्याय नमः । गात्रेषु प्रागादिप्रदक्षिणम् । ॐ अधर्माय नमः । ॐ अज्ञानाय नमः । ॐ अवैराग्याय नमः । ॐ अनैश्वर्याय नमः । एतानष्टौ पादगात्रभेदभावनया पूजयेत् । तदुपरि ॐआनन्दकन्दाय नमः ॐ संविन्नालाय नमः । ॐ सं सर्वतत्त्वात्मकपद्माय नमः । ॐ प्रकृ-तिमयपत्रेभ्यो नमः । ॐ विकृतिमयकेसरेभ्यो नमः । ॐ पञ्चाशद्वर्णपीठाढ्य-कर्णिकायै नमः । तत्कर्णिकायाम् ॐ अं सूर्यमण्डलाय नमः । तत्कलास्त-न्मण्डलेऽग्न्यादिप्रदाक्षिण्यं वृत्ताकारेण कंभं तपिनीकलायै नमः । खंबं तापिनी-कलायै नमः । गंफं धूम्रकलायै नमः । धं [illegible] मरीचिकलायै नमः । ङंनं ज्वालिनीकलायै नमः । चंधं रुचिकलायै नमः । छंदं सुषुम्नाकलायै

नमः । जंथं भोगदाकलायै नमः । झंतं विश्वकलायै नमः । अंणं बोधिनीकलायै नमः । टंढं धारिणीकलायै नमः । ठंडं क्षमाकलायै नम इति संपूज्य । केसरेषु ॐसोममण्डलाय नमः । तत्कलाः अं अमृतकलायै नमः । आं मानदाकलायै नमः । इं पूषाकलायै नमः । ईं तुष्टिकलायै नमः । उं पुष्टिकलायै नमः । ऊं रतिकलायै नमः । ऋं धृतिकलायै नमः । ॠं शशिनीकलायै नमः । ऌं चन्द्रिकाकलायै नमः । ॡं कान्तिकलायै नमः । एं ज्योत्स्नाकलायै नमः । ऐं श्रीकलायै नमः । ओं प्रीतिकलायै नमः । औं अङ्गदाकलायै नमः । अं पूर्णाकलायै नमः । अः पूर्णामृतकलायै नमः इति संपूज्य । पत्रेषु मं वह्निमण्डलायै नमः । तत्कलाः यं धूम्रार्चिःकलायै नमः । रं ऊष्माकलायै नमः । लं ज्वलिनीकलायै नमः । वं ज्वालिनीकलायै नमः । शं विस्फुलिङ्गिनीकलायै नमः । षं सुश्रीकलायै नमः । सं सुरूपाकलायै नमः । हं कपिलाकलायै नमः । वामदक्षिणपार्श्वयोः ळं हव्यवाहकलायै नमः । क्षं कव्यवाहकलायै नमः इति संपूज्य । कर्णिकायां सं सत्त्वाय नमः । केसरेषु रं रजसे नमः । पत्रेषु तं तमसे नमः । एवमेव आं आत्मने नमः । अं अन्तरात्मने नमः । पं परमात्मने नमः । सर्वपद्मे ॐ ह्रीं ज्ञानात्मने नमः । अग्न्यादिप्रदक्षिणमष्टदलेषु मध्ये च रां दीप्तायै नमः । रीं सूक्ष्मायै नमः । रूं जयायै नमः । रें भद्रायै नमः । रैं विभूत्यै नमः । रों विमलायै नमः । रौं अमोघायै नमः । रं विद्युतायै नमः । रः सर्वतोमुख्यै नमः । ॐब्रह्मविष्णुशिवात्मकाय सौरयोगपीठाय नमः । इति समस्तपीठं पूजयेत् । इति पीठपूजा ।

ततः सुवर्णादिनिर्मितमूर्तेर्यन्त्रस्य वाऽग्न्युत्तारणं कुर्यात् । तद्यथा–देवताधिष्ठानयोग्यतासिद्ध्यर्थमग्न्युत्तारणं करिष्ये । अग्निः सप्तिमिति सप्तर्चस्य सूक्तस्य सौचीकोऽग्निर्वैश्वानरस्त्रिष्टुपग्न्युत्तारणे विनियोगः । सप्तिं वाजामित्यादिना पुनरग्निः सप्तिमित्यादिना पयोधारयाऽग्न्युत्तारणं विधाय पञ्चामृतेन शुद्धोदकेन [ च ] संस्नाप्य मूलेन पुष्पाञ्जलिं दत्त्वा पुष्पाञ्जलिमादायाऽऽवाहनीं बद्ध्वा तत्र प्रासादाख्यवाग्बीजकर्णिकं स्वरकेसरं कचटतपयशहवर्गपत्रकं दिग्गतवकार-

विदिग्गतलकारभूगृहवेष्टितं मातृकापद्मं ध्यात्वा प्राग्हृदयाचिन्तितां मूलचिन्मन्त्ररूपिणीं ब्रह्मविद्यां गायत्रीं साङ्गां सपरिवारां ध्यानोक्तरूपां सर्वमङ्गलां श्वासमार्गेण दक्षिण नासारन्ध्रेण बहिर्निर्गमय्य दीपाद्दीपान्तरमिव कुसुमाञ्जलावानीय कल्पितमूर्तौ यन्त्रे वाऽऽवाह्याऽऽवाहनीस्थापनीमिवेशनीसंरोधनीति मुद्राः प्रदर्श्य पूर्वोक्तां प्राणप्रतिष्ठां विधाय ततोऽधिकफलार्थं गायत्रीमन्त्रसंयुतैरकारादिक्षकारान्तैः पुनः क्षकाराद्यकारान्तैः पुनरकारादिक्षकारान्तैर्मातृकावर्णैः साबिन्दुभिरात्मवद्देव्या देहं व्यापयेत् । तद्यथा ॐ भूर्भुवस्त्वः तत्सवितुर्वरेण्यं० अं० क्षं० ५१ क्षं० अं० ५१ अं० क्षं० ५१ ॐ भूर्भुवः स्वः तत्सवितुर्वरे०

गायत्रीपुटितां ब्रह्मन्मातृकाक्षरमालिकाम् ।
अनुलोमाविलोमेन योजयेत्संप्रसन्नधीः ॥ १ ॥

इत्युक्त्वाद्ग्नीशासुरवाय्व्यमध्ये दिक्षु च षडङ्गैरभ्यर्च्य मूलेन धेनुमुद्रयाऽमृतीकृत्य तेनैव महामुद्रया परमीकृत्य पुरुषसूक्तेन मूलेन च पूजां कुर्यात् । तद्यथा---सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायण ऋषिः पुरुषो देवताऽनुष्टुप् छन्दोऽन्त्या त्रिष्टुप् पूजायां विनियोगः तत्रादौ न्यासे विनियोगः ॐ सहस्र० वामकराय नमः । ॐपुरुष० दक्षिणकराय नमः । ॐएतावान० वामपादाय नमः । ॐत्रिपादूर्ध्व० दक्षिणपादाय नमः । ॐ तस्माद्विरा० । वामजानवे नमः । ॐयत्पुरुषेण० दक्षिणजानवे नमः । ॐ तं यज्ञं० वामकट्यै नमः । ॐ तस्माद्यज्ञात्सर्वहुतः सं० दक्षिणकट्यै नमः । ॐतस्याद्यज्ञात्सर्वहुत ऋच० नाभ्यै नमः । ॐ तस्मादश्वा० हृदयाय नमः । ॐ यत्पुरुषं व्य० कण्ठाय नमः । ॐब्राह्मणोऽस्य० वामबाहवे नमः । ॐ चन्द्रमा मन० दक्षिणबाहवे नमः । ॐ नाभ्या आ० मुखाय नमः । ॐ सप्तास्या० नेत्राभ्यां नमः । ॐ यज्ञेन यज्ञ० मूर्ध्ने नमः । ततो मुक्ताविद्रुमेति ध्यात्वा ॐ सहस्रशीर्षा० मूलान्ते मूर्तौ यन्त्रे वा सावित्रीमावाहयामीत्यावाह्य सावित्रि ते कुशलमिति वदेत् । ॐ पुरुष एवेदं० मूलं [ उच्चार्येति सर्वत्र ] सावित्रि ते आसनम् । ॐएतावान० मूलं सावित्रि ते पाद्यम् । ॐ त्रिपाद० मूलं सावित्रि ते स्वाहाऽर्घ्यं प्रत्युपचारं मूर्तौ पुष्पाञ्जलिं क्षिपेत् ।

समर्पयामि शिरसि ॐ तस्माद्विरा० मूलं सावित्रि ते सुधाचमनीयं समर्पयामीति मुखे मूलं सावित्रि ते दधिमधुघृतमधुपर्कं समर्पयामीति मुखे। मूलं सावित्रि ते पुनराचमनीयम्। ॐ यत्पुरुषेण० मूलं सावित्रि ते नमः। स्नानं समर्पयामीति सुगन्धोदकैः सर्वाङ्गे। मूलं सावित्रि ते ॐ आप्यायस्वेति पयःस्नानम्। मूलं ॐ दधिक्राव्ण इति दधिस्नानम्। मूलं ॐघृतं मिमिक्ष इति घृतस्नानम्। मूलं ॐ मधु वाता इति मधुस्नानम्। मूलं ॐ स्वादुः पवस्वेति शर्करास्नान समर्पयामि। मूलं सुगन्धतैलाद्युद्वर्तनम्। मूलम् उष्णोदकस्नानम्। मूलं गन्धपुष्पधूपदीपनैवेद्यपञ्चोपचारान्कल्पयित्वा ततः पुरुषसूक्तेन स्नापयेत्। ॐ तं यज्ञं ब० मूलं सावित्रि ते बार्हस्पत्यं वासोयुग्म समर्पयामि। ॐ तस्माद्यज्ञात्सर्वहुत संभृ० मूलम्। उपवीतं समर्पयामि। मूलं सावित्रि ते विष्णुदैवत्यानलंकारान्समर्पयामि। ॐ तस्माद्यज्ञात्सर्वहुत ऋचः० मूलं सावित्रि ते सुगन्धं समर्पयामि। मूलं पटवासचूर्णं समर्पयामि। ॐ तस्मादश्वा० मूलं सावित्रि ते नानाविधपुष्पाणि समर्पयामि। मूलं तुलसीदलानि समर्पयामि। मूलं बिल्वपत्राण्यपरिमितानि समर्पयेत्। ततो मातृकास्थानेषु मूलपुटितमातृकाक्षरैर्देवीं संपूज्याङ्गमन्त्रैरग्नीशासुरवायव्यमध्ये दिक्षु च पूजयेत्। ततः शिरसि ब्रह्मणे नमः। विश्वामित्राय नमः। गुरवे नमः। इति देवीं संपूज्य देवीदक्षिणवामाधःकरयोस्तद्वरदाय नमः। सवितुरभयाय नमः। एवमेव कोणाद्यष्टपदेषु वरेण्यमङ्कुशाय नमः। भर्गः कक्षायै नमः। देवस्य कपालाय नमः। धीमहि गुणाय नमः। धियः शङ्खाय नमः। यश्चक्राय नमः। नः पद्माय नमः। प्रचोदयात्पद्माय नमः। इति संपूज्य ततो देवीं प्रसन्नां ध्यात्वा पुष्पैरक्षतैर्वा गायत्र्यावरणानि पूजयेत्।

विश्वेशि करुणामूर्ते भक्तानुग्रहकारिके।
अनुज्ञां देहि भवति परिवारार्चनाय मे॥ १॥

अथ गायत्र्या आवरणानि लिख्यन्ते-त्रिकोणनैर्ऋत्यकोणे

पीतकल्पां पीतवर्णां वेदास्यां कुण्डिकास्रजौ।
पद्मे च दधतीमाद्विंवेदपादमयीं स्मरेत्॥

इति ध्यात्वा ॐ तत्सवितुर्वरेण्यं गायत्र्यै नमः। पूर्वकोणे

शङ्खचक्रगदापद्महस्ता बालारुणप्रभा ।
रक्तभूषा यजुर्वेदमध्यपादमयी शुभा ॥

इति ध्यात्वा ॐ भर्गो देवस्य धीमहि सावित्र्यै नमः । वायव्ये

टङ्काक्षाभयदानाढ्या त्रीक्षणेन्दुकिरीटिनी ।
वाणी शुभ्रविभूषाढ्या सामान्त्यपदरूपिणी ॥

इति ध्यात्वा ॐ धियो यो नः प्रचोदयात्सरस्वत्यै नमः । त्रिकोणाद्बहि राग्नेय्याम्—

पीतकल्पं पीतवर्णं वेदास्यं कुण्डिकास्रजौ ।
पद्मद्वयं संदधतं स्वरात्मानं विधिं स्मरेत् ॥

इति ध्यात्वा ॐ स्वः ब्रह्मणे नमः । पश्चिमायाम् -

शङ्खचक्रगदापद्मकरं बालारुणप्रभम् ।
रक्तकल्पं भुवर्लोकमयं विष्णुमनुस्मरेत् ॥

इति ध्यात्वा भुवः विष्णवे नमः । ऐशान्याम्—

टङ्काक्षाभीवरकरं त्र्यक्षमिन्दुकिरीटिनम् ।
शुभ्रशुद्धविभूषाढ्यं स्मरेद्भूमयमीश्वरम् ॥

इति ध्यात्वा ॐ भूः रुद्राय नम इति संपूज्य—

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

मूलेन पुष्पाञ्जलिदानेन प्रथमावरणं समर्पयेत् । पञ्चोपचारान्प्रत्यावरणं कल्पयेदित्यन्ये । दयाब्धे त्राहि संसारेति प्रत्यावरणं तत्र प्रथमावरणार्चनं द्वितीयावरणार्चनमित्याद्यूहः कार्य एवं सर्वत्र ।

तुषारस्फटिकश्यामनीलकृष्णारुणत्विषः ।
वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ॥

इति षडङ्गदेवता ध्यात्वा आग्नेयपत्रकेसरयोर्मध्ये ॐ तत्सवितुर्वरेण्यं ब्रह्मात्मने हृदयाय नम इति हृदयदेवतायै नमो हृदयदेवतां पूजयेत् । ऐशानपत्र-

केसरयोर्मध्ये ॐ भर्गो देवस्य धीमाहि विष्णवात्मने शिरसे स्वाहेति शिरोदेवतायै नमः शिरोदेवतां पूजयेत् । नैर्ऋत्यपत्रकेसरयोर्मध्ये ॐ धियो यो नः प्रचोदयात् रुद्रात्मने शिखायै वषट् शिखादेवतायै नमः शिखादेवतां पूजयेत् । वायव्यपत्रकेसरयोर्मध्ये ॐ आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः सुवरोमीश्वरात्मने कवचाय हुं कवचदेवतायै नमः कवचदेवतां पूजयेत् । देव्यग्रे ॐ परो रजसेऽसावदों सदाशिवात्मने नेत्रत्रयाय वौ ट् नेत्रदेवतायै नमः नेत्रदेवतां पूजयेत् । प्रागादिकेसरद्वंद्वमध्येषु ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमाहि धियो यो नः प्रचोदयात् ॐ आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् । ॐ परो रजसेऽसावदों सर्वात्मने अस्त्राय फट् अस्त्रदेवतायै नमोऽस्त्रदेवतां पूजयेत् । इति द्वितीयावरणम् । मध्ये प्रागादिदिग्दलेषु च–

एते रक्ताम्बरा रक्ताः पद्मद्वयवराभयाः ।
आदित्याद्या भूषणाढ्या ध्येयाः सर्वसमृद्धिदाः ॥

इति ध्यात्वा ॐ आदित्याय नमः । एं रवये नमः । उं भानवे नमः । इं भास्कराय नमः । अं सूर्याय नमः । आग्नेयादिदलेषु–

उषाद्या रक्तवसना रक्ताः पद्मकराम्बुजाः ।
भूषाविभूषिता ध्येया वह्न्यादिदलगाः शुभाः ॥

इति ध्यात्वा उं उषायै नमः । प्रं प्रज्ञायै नमः । प्रं प्रभायै नमः । सं संध्यायै नमः । इति तृतीयावरणम् ।

कुन्देन्दुधवलाकारा मणिमुक्ताद्यलंकृताः ।
गुणाङ्कुशांभोजयुग्मकराः प्रह्लादिनीमुखः ॥

इति पीठत्रयशक्तीर्ध्यात्वा प्रथमपीठभागाद्यष्टदिक्षु तत्प्रह्लादिन्यै नमः । सं प्रभायै नमः । विं नित्यायै नमः । ं विश्वंभरायै नमः । वैं विलासिन्यै नमः । रें प्रभावत्यै नमः । णिं जयायै नमः । यं शान्त्यै नमः । इति चतुर्थावरणम् ।

तद्बहिःपीठे प्राग्वत् । भं कान्त्यै नमः । गों दुर्गायै नमः । दें सरस्वत्यै

नमः। वं विश्वरूपायै नमः। स्यं विशालायै नमः। धीं ईशान्यै नमः। मं व्यापिन्यै नमः। हिं विमलायै नमः। इति पञ्चमावरणम्।

तद्बहिःपीठे प्राग्वत्। धिं तमोपहारिण्यै नमः। यों सूक्ष्मायै नमः। यों विश्वायै नमः। नः जयावहायै नमः। प्रं पद्मालयायै नमः। चों परायै नमः। दं शोभायै नमः। यात् पद्मरूपायै नमः। इति षष्ठावरणम्।

ततः पूर्वद्वारदक्षिणशोभायाम्—

दण्डं कमण्डलुं पश्चादक्षसूत्रमथाभयम्।
बिभ्रतीं कनकच्छायां ब्राह्मीं कृष्णाजिनोज्ज्वलाम्॥

इति ध्यात्वा आं ब्राह्म्यै नमः। दक्षिणद्वारपूर्वशोभायाम्—

शूलं परश्वधं क्षुद्रदुंदुभिं नृकरोटिकाम्।
वहन्तीं हेमसंकाशां ध्यायेन्माहेश्वरीं शुभाम्॥

इति ध्यात्वा ईं माहेश्वर्यै नमः। तत्पश्चिमशोभायाम्—

अङ्कुशं दण्डखट्वाङ्गे पाशं च दधतीं करैः।
ध्यायेद्बन्धूकसंकाशां कौमारीं कामदायिनीम्॥

इति ध्यात्वा ऊं कुमार्यै नमः। पश्चिमद्वारदक्षिणशोभायाम्—

चक्रं घण्टां कपालं च शङ्खं च दधती करैः।
तमालश्यामला ध्येया वैष्णवी विभ्रमोज्ज्वला॥

इति ध्यात्वा ऋं वैष्णव्यै नमः। तदुत्तरशोभायाम्—

मुसलं करवालं च खेटकं दधती हलम्।
करैश्चतुर्भिर्वाराही ध्येया कालघनच्छविः॥

इति ध्यात्वा लृं वाराह्यै नमः। तदुत्तरद्वारपश्चिमशोभायाम्—

अङ्कुशं तोमरं विद्युत्कुलिशे बिभ्रती करैः।
इन्द्रनीलनिभेन्द्राणी ध्येया सर्वसमृद्धिदा॥

इति ध्यात्वा ऐं इन्द्राण्यै नमः। तत्पूर्वशोभायाम्—

शूलं कपालं नृशिरःकपालं दधती करैः।
मुण्डस्रङ्मण्डिता ध्येया चामुण्डा रक्तविग्रहा॥

इति ध्यात्वा औं चामुण्डायै नमः। पूर्वद्वारौत्तरशोभायाम्—

अक्षस्रजं बीजपूरं कपालं पङ्कजं करैः।
वहन्ती हेमसंकाशा महालक्ष्मीः सुरार्चिता॥

इति ध्यात्वा अः महालक्ष्म्यै नमः। पूर्वद्वारे—

दाडिमीकेसरप्रख्यं कशाराश्विकराम्बुजम्।
रक्ताम्बरविभूषाढ्यमनुरूपारुणं स्मरेत्॥

इति ध्यात्वा अं अरुणाय नमः। इति सप्तमावरणम्।

ततः प्रादक्षिण्येनाऽऽग्नेयादिविदिक्चतुष्टये—

पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः॥
सप्ताश्वरथसंयुक्तो द्विभुजः स्यात्सदा रविः।

इति ध्यात्वा यों रवये नमः। शोभाक्रमेणोपशोभाष्टके—

श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः।
गदापाणिर्द्विबाहूश्च कर्तव्यो वरदः शशी॥

इति ध्यात्वा ईं सोमाय नमः।

रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः।
चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः॥

इति ध्यात्वा कों भौमाय नमः।

पीतमाल्याम्बरधरः कार्णिकारसमद्युतिः।
खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः॥

इति ध्यात्वा चों बुधाय नमः।

पीतः सुरगुरुः पीतभूषो ध्येयश्चतुर्भुजः।
दण्डी वरप्रदः साक्षसूत्रकुम्भकराम्बुजः॥

इति ध्यात्वा टों गुरवे नमः।

शुक्लः शुक्लाम्बरः शुक्लभूषो ध्येयश्चतुर्भुजः।
दण्डी वरप्रदः साक्षसूत्रकुम्भकराम्बुजः॥

इति ध्यात्वा तों शुक्राय नमः।

इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः ।
बाणबाणासनधरः स्मर्तव्योऽर्कसुतः सदा ॥

इति ध्यात्वा पों सौरये नमः ।

करालवदनः खड्गचर्मशूली वरप्रदः ।
नीलसिंहासनस्थश्च राहुर्ध्येयो वरप्रदः ॥

इति ध्यात्वा यों राहवे नमः ।

धूम्रवर्णाद्विबाहुश्च गदाभृद्विकृताननः ।
गृध्रासनगतो नित्यं केतुर्ध्येयो वरप्रदः ॥

इति ध्यात्वा षों केतवे नमः । इत्यष्टमावरणम् ।

ततश्चतुरस्रप्रथमवीथ्यां यथास्थितप्रागाद्यष्टदिक्षु लं इन्द्राय सुराधिपतये पीतवर्णाय वज्रहस्तायैरावतवाहनायेन्द्राणीशक्तिसहिताय नमः । रं अग्नये तेजोधिपतये रक्तवर्णाय शक्तिहस्ताय मेषवाहनाय स्वाहाशक्तियुताय नमः । षं यमाय प्रेताधिपतये श्यामवर्णाय दण्डहस्ताय महिषवाहनाय वाराहीशक्तियुताय नमः। क्षं निर्ऋतये रक्षोधिपतये धूम्रवर्णाय खड्गहस्ताय प्रेतवाहनाय खड्गिनीशक्तिसहिताय नमः । वं वरुणाय जलाधिपतये शुक्लवर्णाय पाशहस्ताय मकरवाहनाय वारुणीशक्तिसहिताय नमः ॥ यं वायवे प्राणाधिपतये धूम्रवर्णायाङ्कुशहस्ताय मृगवाहनाय वायवीशक्तिसहिताय नमः । सं कुबेराय यक्षाधिपतये मौक्तिकवर्णाय गदाहस्ताय नरवाहनाय कौबेरीशक्तिसहिताय नमः । ईशानेन्द्रयोर्मध्य ऊर्ध्वं आं ब्रह्मणे लोकाधिपतये रक्तवर्णाय पद्महस्ताय हंसवाहनाय वाणीशक्तियुताय नमः । निर्ऋतिवरुणयोर्मध्येऽधो ह्रांमनन्ताय नागाधिपतये शुक्लवर्णाय चक्रहस्ताय गरुडवाहनाय योगिनीशक्तियुताय नमः । इति नवमावरणम् । एवमेव द्वितीयवीथ्याम् ॐ पीतवर्णाय वज्राय नमः । ॐ शुक्लवर्णायै शक्त्यै नमः । ॐ असितवर्णाय दण्डाय नमः । ॐ आकाशवर्णाय खड्गाय, नमः । ॐ विद्युत्प्रभाय पाशाय नमः । ॐ रक्तवर्णायाङ्कुशाय नमः । ॐ सितवर्णायै गदायै नमः । ॐ असितवर्णाय शूलाय नमः । ॐ कुरुविन्दवर्णाय पद्माय नमः । ॐ पाटलाभाय चक्राय नमः । इति दशमावरणम् । पूर्वोक्तो-

पचारैरावरणानि संपूजयेत् । ॐ यत्पुरुषं० मूलं सावित्रि ते धूपमाघ्रापयामि । साङ्गारं धूपपात्रमानीय तत्रागरूशीरगुग्गुलुशर्कराचन्दनचूर्णानि मधुघृतयुक्तानि निक्षिप्य धेनुमुद्रयाऽमृतीकृत्य गन्धर्वदैवताय धूपाय नमः । इति संपूज्यास्त्रमन्त्रेण पूजितां घण्टां वामकरेण वादयन्दक्षिणेन धूपपात्रमादाय पादयोर्धूपं निवेदयेत् । देव्या वामतः पुरतो वा तत्पात्रं निदध्यात् । ॐ ब्राह्मणोऽस्य० मूलं सावित्रि ते दीपं समर्पयामीति निवेदयेत् । कर्पूरगर्भिण्या, अगरुगर्भिण्या वा वर्त्या युतं घृतपूरितं सुरभितैलपूरितं वा जाज्वल्यमानं दीपमानीय विष्णुदैवताय घृतप्रदीपाय नमो वनस्पतिदैवताय तैलदीपाय नम इति वा ।

सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ।
सबाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

इत्यनेन पारावतभ्रपाकारं देव्या नेत्रादिपादान्तं पुनः पादादिनेत्रान्तं त्रिर्देव्यै दीपं प्रदर्शयेत् । घृतदीपं देवीदक्षिणेऽन्यं वामे । ॐ चन्द्रमा मनसो० मूलं सावित्रि ते नैवेद्यम् । चतुर्विधमन्नं षड्रसोपेतं स्वर्णादिभाजनस्थं समानीय पुरतश्चतुष्कोणमण्डलोपरि साधारं स्थापयित्वा गायत्र्या प्रणवेनार्घ्योदकेन संप्रोक्ष्य तेनैव पुष्पं निक्षिप्य वमिति धेनुमुद्रयाऽमृती कुर्यात् । ततः साङ्गायै सायुधायै सवाहनायै सपरिवारायै सर्वात्मिकायै भगवत्यै श्रीमद्गायत्र्यै नैवेद्यं समर्पयामीति जलं क्षिपेत् । तत ॐ अमृतोपस्तरणमसि स्वाहेति देव्या हस्ते जलं दद्यात् । ततो वामकरेण विकचोत्पलसंनिभां ग्रासमुद्रां प्रदर्श्य दक्षिणकरेण समन्त्रकं प्राणादिमुद्राः प्रदर्शयेत्तद्यथा—ॐ प्राणाय स्वाहेत्यङ्गुष्ठतर्जनीमध्यमाभिः । ॐअपानाय स्वाहेत्यङ्गुष्ठमध्यमानामिकाभिः । ॐ व्यानाय स्वाहेत्यङ्गुष्ठानामिकाकनिष्ठिकाभिः । ॐ उदानाय स्वाहेत्यङ्गुष्ठतर्जनीकनिष्ठिकाभिः । ॐ समानाय स्वाहेति सर्वाभिः ।

सत्पात्रे सद्धविः साज्यं वि विधानेकभक्षणम् ।
निवेदयामि ते देवि सानुगायै जुषस्व तत् ॥

ततश्चक्रमुद्रां दर्शयित्वा मूलमन्त्रमष्टधा जपित्वा मत्स्यमुद्रयाऽऽच्छादयेत् । ततोऽस्त्रेण दिशो वेष्टयेत् । ततो भुञ्जानां गायत्रीं ध्यायेत्—

ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समेता
दिव्याभिः स्वैर्ललितललितैर्वीज्यमाङ्गनाभिः ।
नर्मक्रीडाप्रहसनपरा हासयन्ती स्वभोक्तॄन्
भुङ्क्ते पात्रे कनकघटिते षड्साञ्छूीविधात्री ॥ १ ॥
भोजनावसरे मन्त्री वैश्वदेवं समाचरेत् ।

तत्र देवीदक्षिणेऽङ्गुलोत्सेधं समन्ततो हस्तमात्रं चतुरस्रं स्थण्डिलं निर्माय वालुकाभिर्मूलेन संवीक्ष्यास्त्रेण प्रोक्ष्य तेनैव कुशैः संताड्य कवचेनाभ्युक्ष्य तत्र संस्कृताग्निं प्रणवेन संस्थाप्य प्रज्वाल्य परिसमुह्य परिस्तीर्य ॐ अग्नये नम इति संपूज्य तत्र देवीं ध्यात्वा गन्धाद्यैः संपूज्य तत्र घृताक्तपायसेन भक्तेन सर्पिषा वा प्रणवादिव्यस्तसमस्तव्याहृतिभिराहुतिचतुष्टयं हुत्वा मूलेन पञ्चविंशत्याहुतीर्हुत्वा पुनर्व्यस्तसमस्ताभिर्व्याहृतिभिराहुतिचतुष्टयं हुत्वा पुनस्तत्र देवीं गन्धादिभिः संपूज्य पुनर्मूर्तौ देवीं संपूज्य परिस्तरणादिविसर्जनपूर्वकं वह्निं विसर्जयेत् । आद्यन्तयोः सप्तव्याहृतिभिः सप्ताऽऽहुतीर्मूलेन चतुर्विंशत्याहुतीर्हुनेदिति वसिष्ठसंहितायाम् । ततो हुतावशिष्टेन देवतायाः परितो गन्धपुष्पाक्षतान्वितं पार्षदेभ्यो बलिं दद्यात् ते तद्यथा–

ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।
योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्च ये ॥
विघ्नभूतास्तथा चान्ये दिग्विदिक्षु समाश्रिताः ।
ते सर्वे तृप्तिमनसः प्रतिगृह्णन्त्विमं बलिम् ॥
भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम् ।
अन्यत्र वासं परिकल्पयन्तु शमन्तु तान्यत्र नमोऽस्तु तेभ्यः ॥

इत्यनेनाष्टदिक्षु विकिरेत् । ततः पूजास्थानं गत्वा सुतृप्तां देवीं ध्यात्वा धेनुमुद्रया जलममृतीकृत्यामृतापिधानमसि स्वाहेति देवीमुखे जलं दद्यात् । ततो नैवेद्यमुद्धृत्य नैर्ऋत्यां दिशि धारयेत् । तत्स्थानं शोधयित्वा मूलं सावित्रि ते । आचमनीयम् । मूलं सावित्रि ते हस्तप्रक्षालनम् । मूलं सावित्रि ते आस्यप्रक्षालनम् । मूलं सावित्रि ते करोद्वर्तनार्थे सुगन्धं चन्दनम् । मूलं सावित्रि ।

ते फलम् । ॐ नाभ्या आसी० मूलं सावित्रि ते सकर्पुरं ताम्बूलम् । मूलं सावित्रि ते सुवर्णपुष्पदक्षिणाम् । ॐ सप्तास्याऽऽनन्० मूलं सावित्रि ते नीराजनम् । ततो यथाविधिविहितमारात्रिकपात्रमानीय चक्रमुद्रां प्रदर्श्य वमिति धेनुमुद्रयाऽमृतीकृत्य मूलेनाभ्यर्च्य

समस्तदेवताचक्रमुनिपितृगणावृते ।
आरात्रिकं गृहाणेदं सावित्रि मम सिद्धये ॥

इत्यनेन घण्टावादनपूर्वकं पारावतभ्रमाकारमुच्चैर्देवीं पूर्ववन्नीराजयेत् । ॐ यज्ञेन यज्ञ० मूलं सावित्रि तेऽनैकाविधपुष्पाञ्जलिं समर्पयामि । अत्रान्यानपि वैदिकपौराणिकमन्त्रान्पठेत् मूलं सावित्रि ते नमस्कारान् । तत्र च्छत्रचामरे दर्शयेत् ।

नानोषभूषणं दद्यान्नृत्यं गीतं च कारयेत् ।

पुनःपुनर्नत्वा क्षमापयेत् । ततस्तिथ्यादि स्मृत्वा पुरश्चरणसंरक्षणार्थं महाकृत्यादिमन्त्रेण संरक्षणमहं करिष्ये ।

गच्छ देवि सुरश्रेष्ठे कृत्या त्वं योगरूपिणी ।
दुष्टम्लेच्छराक्षसादीनागमान्छाम्बरांस्तथा ॥
संत्रासय प्रयत्नेन सुरसंरक्षणं कुरु ।

अथ न्यासः ॐ आवायव्य हृदयाय नमः । ॐ यावायव्या शिरसे स्वाहा । ॐ व्यायवाया शिखायै वषट् । ॐ व्यवययआ कवचाय हुम् । ॐ औवायव्य नेत्रत्रयाय वौषट् । ॐ यावायव्या अस्त्राय फट् । इत्यस्त्रगायत्रीन्यासः । अथास्त्रोपसंहारः । अस्य श्न्यस्त्रोपसंहारमन्त्रस्य सवितृभार्गव ऋषिः सविता देवता गायत्री छन्दः अस्त्रोपसंहरणे विनियोग ।

सोऽहमर्कः परं ज्योतिरर्कज्योतिः परं शिवः ।
आत्मज्योतिरहं शुक्लः शुक्लज्योती रसाऽस्म्यहम् ॥
आवायव्ययावायव्याव्यायवायाव्ययआ ।
ओवायव्ययावायव्याॐवायव्ययावायव्योऽसि पाप्मानं मे छिन्धि ॥
सावित्रोऽसि पाप्मानं मे छिन्धि ।

ॐ सवित्रे नमः ब्रह्मणे नमः । शाश्वते नमः । कर्मदायिने नमः । विष्णुरूपिणे नमः । जगत्सवित्रे नमः । भास्कराय नमः । एभिर्नाममन्त्रैः स्वदेहोपर्यक्षतान्निक्षिप्य तदुपरि योगमुद्राः प्रदर्शयेत् । देवतारूपं भावयेत् । हृदये हस्तं दत्त्वा मां संरक्षय विघ्नान्नाशय । अथ शापविमोचनम् । अस्य श्रीब्रह्मशापविमोचनविधानमन्त्रस्य निग्रहानुग्रहकर्ता प्रजापतिर्ऋषिः शक्तिर्देवता गायत्री छन्दो ब्रह्मशापविमोचनार्थे जपे विनियोगः । ॐ गायत्रीं सततं भजामि । विश्वगर्भां तुयँस्मिन्देवा जाता अजायन्त अग्रे तां प्रजापतिमारुतः शक्तिः सावित्रीं भजे विश्वमाद्यं सृजन्तीम् । ब्रह्मशापविमुक्ता भव । अस्य श्रीविश्वामित्रशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता विश्वामित्र ऋषिः शक्तिर्देवता गायत्री छन्दो विश्वामित्रशापविमोचनार्थे जपे विनियोगः । ॐ गायत्रीं सततं भजामि । सुमुखीं विश्वगर्भां यदुद्भवा देवाश्चक्रिरीविसृष्टिः यत्कल्याणी अभीष्टकरी प्रपद्ये यन्मुखीनिसृखीनवेदगर्भा । विश्वामित्रशापविमुक्ता भव । अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता वसिष्ठऋषिः शक्तिर्देवता गायत्री छन्दो वसिष्ठशापवि[मो]चनार्थे जपे विनियोगः । ॐ अहो महान्विश्वरूपे दिव्ये संध्ये सरस्वति । अजरे अमरे देवि ब्रह्मविद्ये नमोऽस्तु ते । वसिष्ठशापवि[मु]क्ता भव । अथ गायत्र्यस्त्रं जपेत् । ॐ यां कल्पयन्ति नोऽरयः क्रूरां कृत्यां वधूमिव । त्यादचोप्रनः योयोधिहिमधींस्यवदेर्गोभर्यणिरेवंतुवित्सतस्वर्वर्भुभूरोम् । तां ब्रह्मणाऽपनिर्णुद्मः प्रत्यः कर्तारमृच्छतु । हनहन हुं फट् । इति ब्रह्मास्त्रम् । ॐ शीर्षण्वतीं कर्णवतीं विषुरूपां भयंकरीम् । प्रचोदयान्नो यो धियो धीमहि देवस्य भर्गो वरेण्यं सवितुस्तत् । यः प्राहिणोवदिहाग्रत्यां विततवं याजेयासुभिः । हनहन हुं फट् । इत्याग्नेयास्त्रम् । ॐ येन दिष्टेहवदसिप्रतिकूलमघायिनि । धियो योनः प्रचोदयात् । भर्गो देवस्य धीमहि । तत्सवितुर्वरेण्यम् । तमेवेतो निवर्त्यो-पमस्मानृच्छेअनागसः । हननन हुं फट् । इति नारायणास्त्रम् । अत्र विशेषमाह ध्यानमुद्रादिकं न कुर्यात् । न प्रयोगादिकं संरक्षणमात्रम् । अभिवर्तस्व कर्तारं निरस्ताऽस्माभिरोजसा । दोंवसासेजररोषत्यादचोप्रनः योयोधिहिमधीस्य-

वेदगोंभयंणिरेवंतुवित्सतव:सुवर्भुर्भूरों । आयुरस्य निकृन्तस्व प्रजां च पुरुषादिनि। हनहन हुं फट् । इति पाशुपतास्त्रम् । यस्त्वा कृत्ये चकारेह त्वं तं गच्छ पुनर्णवे । आवायव्ययावायव्याव्यायवायाव्यवयआ औवां यव्ययावायव्या। अरातीन्कृत्ये नाशय सर्वाश्च यातुधान्यः । क्षिप्रं कृत्यै निवर्तस्व । हनहन हुं फट् । इति वायव्यास्त्रम् । इदं सर्वं महाकृत्यादिवायव्यास्त्रान्तं वैदिकमन्त्रपुरश्चर्यायां कृताकृतम् । स्वतःसिद्धप्रकाशत्वात् । पौराणिकागमोक्तमन्त्रपुरश्चरण आवश्यकमेव । ततः शताक्षरीं गायत्रीमेकवारं जपेत् । तत्सवितुरिति ऋक् । जातवेदसे इति ऋक् । त्र्यंबकं यजामहे इति ऋक् । ततो मूलेन प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गन्यासपूर्वकं जपमालामानीय क्वचित्पात्रे वामहस्ते वा संस्थाप्य मूलमन्त्रेणार्घ्योदकेनाभ्युक्ष्य—

ॐ मां माले महामाये सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥

इत्यनेन गन्धपुष्पाभ्यां संपूज्य ॐ गं अविघ्नं कुरु माले त्वं इति मन्त्रेण दक्षिणहस्तेनाऽऽदाय स्वशिरसि गुरुं कण्ठे मन्त्रं हृदये देवीं गायत्रीं ध्यायन् हृदयसमीपे मालामानीय दक्षहस्तमध्याङ्गुलिमध्यपर्वणि संस्थाप्यैकाग्रचित्त उन्नतगात्रो गायत्र्या अर्थं स्मरन्प्रणवव्याहृतिपूर्वकं तत्सवितुरित्यृचं समाप्तौ प्रणवं चोच्चार्य यथासंख्यं मध्यंदिनावधि जपेत् । अतित्वरायां सार्धप्रहरत्रयावधि जपेत् । पुरश्चरणे त्वक्षरमालया जपो न तु करमालया । तदुक्तं वसिष्ठसंहितायाम्—

नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन । इति ।

अथ जपविधिः—

प्रणवं पूर्वमुच्चार्य भूर्भुवः स्वस्तथा परम् ।
गायत्रीं प्रणवं चान्ते जप एष उदाहृतः ॥

अन्यच्च—प्रणवं पूर्वमुच्चार्य भूर्भुवः स्वस्ततः परम् ।
पादादौ प्रणवोच्चार्यः पादान्ते प्रणवोच्चरेत् ॥

प्रणवत्रयसंयुक्तां त्रिबीजसंयुतां जपेत् ।
अन्यथा जपमानस्य नैष्फल्यं शौनकोऽब्रवीत् ॥
जपसंख्याष्टभागान्ते पादो जाप्यस्तुरीयकः ।
स द्विजः परमो ज्ञेयः परं सायुज्यमाप्नुयात् ॥
अन्यथा प्रजपेद्यस्तु स जपो निष्फलो भवेत् ।
नित्ये नैमित्तिके काम्य सर्वदा चतुरीं जपेत् ॥
प्रातः केवलगायत्री मध्याह्ने व्याहृती( ति )युता ।
सायाह्ने तुर्यसहिता गायत्री त्रिविधा मता ।

इति विश्वामित्रसंहितायाम् ।

ततो यथासंख्यं जपं समाप्यान्ते प्रणवमुच्चरेत् । ततः–

त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम ।
शुभं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा ॥

ॐ ह्रीं सिद्धयै नम इति मालां पश्चाक्षय्यां स्वशिरसि संस्थाप्य पुनः प्राणायामत्रयं कृत्वा पूर्वोक्तऋष्यादिकरषडङ्गन्यासं कृत्वा देवीं ध्यायेत्—

मूलाधारे हुतवहकुले भूर्भुवःस्वैकरूपां
मूलस्थाने शशिकरललितां तत्सवितुर्वरेण्यम् ।
भर्गो देवस्य मध्ये सवितृसदृशं धीमहीत्येकरूपां
धियो यो नः परमगहनस्य प्रचोदयात्परां ताम् ॥ १ ॥

इति ध्यात्वा–

सुरभिर्ज्ञानशूर्पे च योनिः कूर्मोऽथ पङ्कजम् ।
लिङ्गं निर्वाणमुद्रा च जपान्तेऽष्टौ प्रदर्शयेत् ॥

इत्यष्टौ मुद्राः प्रदर्शयेत् । ततो देवीवामहस्ते वसिष्ठमते दक्षिणहस्तेऽर्घ्योदकजलेन जपम्–

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥

इत्यनेन समर्प्य देव्यग्रे पुष्पाञ्जलिं क्षिपेत् । ततः ॐ ह्रीं सिद्धयै नम इति मालां संपूज्य रहसि स्थापयेत् ।

नात्युच्चं नातिनीचं च ध्यात्वा मन्त्री जपेन्मनुम् ।
बलिं दत्त्वा नमस्कृत्य स्तुत्वा देवीं विसर्जयेत् ॥

ततो गायत्रीं ध्यात्वा मूलेन पुष्पाक्षतैः संपूज्य घण्टाचामरादिभिः परितोष्य वक्ष्यमाणगायत्रहृदयं गायत्रीकवचं चोदीरयेत् । तान्त्रिकपौराणिकवैदिकस्तोत्रैर्मूलेन च स्तुत्वा पुष्पाञ्जलिं दत्त्वा साष्टाङ्गं प्रणमेत् । ततः कृताञ्जलिः—

यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
निवेदितं च नैवद्यं तद्गृहाणानुकम्पया ॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजाभागं न जानामि त्वं गतिः परमेश्वरि ॥
कर्मणा मनसा वाचा गायत्री त्वं गतिर्मम ।
अन्तश्चारेण भूतानां द्रष्ट्री त्वं परमेश्वरी ॥
देवी दात्री च भोक्त्री च देवी सर्वमिदं जगत् ।
देवी जयति सर्वत्र या देवी सोऽहमेव च ॥
हीनो विभक्तिवर्णैश्च व्यञ्जनैश्च स्वरैस्तथा ।
जपो मे क्षम्यतां देवी प्रसादं कुरु किंकरे ॥

इति क्षमाप्य प्रदक्षिणीकृत्य प्रणमेत् । तत इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारजाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वचसा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहेति स्वेष्टदेवतायै समर्पयेत् । ततो मूलन्त्रेण योनिमुद्रया प्रणम्य देवीं विसर्जयेत् । तत्र विशेषार्घ्यं मूलेन देव्यै समर्प्य तेनैव देवीं नीराज्य स्वस्थाने स्थापयित्वा सपुष्पाभ्यां हस्ताभ्यां कृताञ्जलिः सावरणां तेजोरूपां देवीं ध्यायन्भगवति देवि गायत्रि क्षमस्वेति वदन्—

गच्छ गच्छ परं स्थानं स्वस्थाने परमेश्वरि ।
यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ॥

इत्यनेन संहारमुद्रया निर्माल्यमाकृष्याऽऽघ्राय तत्तेजस्तथैव सुषुम्नावर्त्मना स्वीयहृत्कमले विसर्जयेत् । ततो मूलेन प्राणायामत्रयं कृत्वा–

ॐ तिष्ठ देवि परे स्थाने स्वस्थाने परमेश्वरि ।
यत्र ब्रह्मादयः सर्वे सुरास्तिष्ठन्ति मे हृदि ॥

इत्यनेन स्वहृदये देवीं स्थापयेत् । तत ऋष्यादिकरषडङ्गन्यासपूर्वकं हृदि मानसदेवीं पूजयित्वा तदात्मानमात्मानं भावयन्सुखं विहरेत् ।

निर्माल्यं मस्तके धार्यं सर्वाङ्गे चानुलेपनम् ।
नैवेद्यमुपभुञ्जीत दत्त्वा तद्भक्तिशालिने ॥

इति विश्वामित्रसंहितावचनात् । तथा–

पुष्पादिकं समाघ्राय शुचौ देशेऽप्सु च क्षिपेत् ।
देवतात्मा सुखं स्वस्थो विहरेद्देवताधिया ॥

तथा–पूजां ध्यानं जपं होमं तथा कर्मचतुष्टयम् ।
प्रत्यहं साधकः कुर्यात्स्वयं च सिद्धिमिच्छति ॥
जपस्यान्ते पुनर्ध्यायेद्ध्यानस्यान्ते पुनर्जपेत् ।
जपध्यानसमायुक्तः शीघ्रं सिध्यति मन्त्रवित् ॥

ततः पुरश्चरणदिनमारभ्य समाप्तिदिनपर्यन्तं पुरश्चर्योक्तनियमाद्यकरणदोषपरिहारार्थं पञ्चगव्यं हुनेत् । यज्जाग्रत इति शिवसंकल्पमन्त्रांस्त्रिवारमारम्भप्रभृति समाप्तिदिनपर्यन्तं पठेत् । इति नित्यपूजाविधिः ।

अथ शिवसंकल्पाध्यायः–

ॐ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ २ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किं चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥
येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥
यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥
[ वाजसनेयिशु० य० सं० अ० ३४ ] ।

अथ गायत्रीहृदयम् । नमस्कृत्य भगवान्याज्ञवल्क्यः स्वयंभुं ( भुव ) परिपृच्छति । त्वं नो ब्रूहि भगवा( व )न्गायत्र्युत्पत्तिं तुरीयां श्रोतुमिच्छामि । ब्रह्मज्ञानोत्पत्तिं प्रकृतिं परिपृच्छामि । श्रीभगवानुवाच–

प्रणवेन व्याहृतयः प्रवर्तन्ते । तमसस्तुरीयं ज्योतिः पुरुषः स्वयंभूर्विष्णुरिति । अथाहं पञ्चाङ्गुल्या मथ्नामि । मथ्यमानात्फेनो भवति । फेनाद्बुद्बुदो भवति । बुद्बुदादण्डो भवति । अण्डादाकाशो भवति । आकाशाद्वायुर्भवति । वायोरग्निर्भवति । अग्नेर( र )कारो भवति । आ( अ )कारादुकारो भवति । उकारान्मकारो भवति । मकारादर्धमात्रा भवति । अर्धमात्रां तामेकधा तदोंकारो भवति । ॐ काराद्वषट्कारो भवति । वषट्काराद्व्याहृतिर्भवति । व्याहृत्या गायत्री भवति । गायत्र्याः सावित्री भवति । सावित्र्याः सरस्वती भवति । सरस्वत्यास्तुरीया भवति । तुरीयेभ्यो( याया ) वेदा भवन्ति । वेदेभ्यो ब्रह्मा भवति । ब्रह्मणो लोका भवन्ति । तस्माल्लोकाः प्रवर्तन्ते । अथा-

ग्निर्देवानां ब्राह्मणो मनुष्याणां गङ्गा नदीनां वसन्त ऋतूनां ब्रह्मा प्रजापतीनामेवं ह्यवा मुख्या मनुष्याणा गायत्री। गायत्र्या गायत्री छन्दो भवति। ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ भूर्भुवःस्वः ॐ तत्स-वितुर्वरेण्यम् ॐ भर्गो देवस्य धीमहि ॐ धियो यो नः प्रचोदयात्। ॐ पुरो रजसेऽसावदोम् ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवःस्वरोम्।

याज्ञवल्क्य उवाच–

किं वै भूः किं भुवः किं स्वः किं महः किं जनः किं तपः किं सत्यं किं तत् किं सवितुः किं वरेण्यं किं भर्गः किं देवस्य किं धीमहि किं धियः किं यः किं नः किं प्रचोदयात्। किं परः किं रजसे किमसावदों किमापः किं ज्योतिः किं रसः किममृतं किं ब्रह्म किं भूर्भुवःस्वरोम्। ब्रह्मोवाच–

भूरिति भूर्लोकः। भुव इत्यन्तरिक्षम्। स्वरिति स्वर्लोकः। महरिति महर्लोकः। जन इति जनलोकः। तप इति तपोलोकः। सत्यमिति सत्य-लोकः। तदिति तेजः। तेजसोऽग्निर्देवता सवितुरिति सविता, आदित्यो यो (यः)। वरेण्यं वरेण्यमित्यन्नं वरेणियमन्नमेव प्रजापतिः। भर्ग इत्यापा वै भर्गः। यदापस्तःसर्वा देवताः। देवस्येति यो वै देवो यः पुरुषः स विष्णुः। धीमहीत्यैश्वर्यं यदैश्वर्यं तन्महेश्वरः। धिय इति सप्राणोऽयं वायुः। [ य ] इत्य-ध्यात्मं तत्परमं यः। न इति पृथ्वी। इयं योनिः। प्रचोदयादिति काम कामा यमिमं लोकं लोकाः प्रत्याचक्षते। पर इति परं लोकः। पराल्लोकमेकोत्तरशतं पितरम् (?)। रजस इति राजसयोगामित्येकादश रुद्रा विश्वे देवाः। असाव-दोमिति ब्रह्म। आप इत्यप्सरोलोकः। ज्योतिरिति गन्धर्वलोकः। रस इति किंनरलोकः। अमृतमिति ब्रह्मलोकः। सत्यमिति सत्यं ज्ञानमनन्तं ब्रह्म। भूर्भुवः स्वरोमिति त्रैलोक्यम्। ॐ तत्सत्परं ब्रह्म तस्मात्। अथ संशयो न स्यात्तत्परमो धर्म इत्येषा वै गायत्री।

याज्ञवल्क्य उवाच–

अथ गायत्र्याः किं गोत्रं कत्यक्षराणि कति पदानि कति शीर्षाणि कति कुक्षयः।

ब्रह्मोवाच—

सांख्यायनसगोत्रं द्वात्रिंशदक्षराणि चतुष्पदा वै गायत्री क्वचित्त्रिपदा। चतुर्विंशत्यक्षरा वै गायत्री भवति । अष्ट कुक्षयः सप्त शीर्षाणि भवन्ति। ऋग्वेदोऽस्याः प्रथमपादो भवति। यजुर्वेदो द्वितीयपादः । सामवेदस्तृतीयपादः। अथर्वणवेदश्चतुर्थः पादः। पूर्वा दिक् प्रथमकुक्षिर्भवति । दक्षिणा दिक् द्वितीयकुक्षिर्भवति। पश्चिमा दिक् तृतीयकुक्षिर्भवति। उत्तरा दिक् चतुर्थी कुक्षिर्भवति। ऊर्ध्वा दिक् पञ्चमी कुक्षिर्भवति । अधरा दिक् षष्ठी कुक्षिर्भवति। अन्तरिक्षा दिक् सप्तमी कुक्षिर्भवति। अवान्तरा दिगष्टमी कुक्षिर्भवति। व्याकरणमस्याः प्रथमं शिरो भवति । शिक्षा द्वितीयम् । कल्पस्तृतीयम् । निरुक्तं चतुर्थम। ज्योतिर्नयनमिति पञ्चमम् । इतिहासपुराणानि षष्ठं शिरः। उपनिषदिति सप्तमं शिरो भवति।

याज्ञवल्क्य उवाच—

किं लक्षणम्। किं चेष्टितम्। किमुदाहृतम्

ब्रह्मोवाच—

लक्षणं मीमांसा। वेदान्तोऽथर्वणवेदान्तो वै चेष्टितम् । छन्दो वैचित्यमुदाहृतम्।

याज्ञवल्क्य उवाच—

के स्वराः। कानि बीजानि।

ब्रह्मोवाच—

उदात्तानुदात्तस्वरितप्रचयसमानकम्पविसर्गाः सप्त स्वराः। अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअःकंखंगंघंङंचंछंजंझंञंटंठंडंढंणंतंथंदंधंनंपंफंबंभंमंयंरंलंवंशंषंसंहंळंक्षमित्यक्षराणि बीजानि भवन्ति।

याज्ञवल्क्य उवाच—

व्याहृतीनां सप्तानामृषयश्छन्दांसि देवता वर्णाः स्वरा बीजानि श्रोतुमिच्छामि।

ब्रह्मोवाच—

सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः । गायत्र्युष्णिगनुष्टुब्बृहतपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि । अग्निर्वायुः सूर्यो मित्रावरुणौ इन्द्रो विश्वे देवा देवताः । श्वेतश्यामनीललोहितपीतपिशङ्गकनकवर्णाः । षड्जर्षभ-गान्धारपञ्चमधैवतमध्यमनिषादाः स्वराः । पृथिव्यप्तेजोवाय्वाकाशदिगात्मानो बीजानि ।

याज्ञवल्क्य उवाच—

कति शक्तयः । कति तत्त्वानि । कत्यग्नयः । कति मुद्राः । कति फलानि

ब्रह्मोवाच—

श्रीकीर्तिमायाधृतिमेधास्मृतिवाचः शक्तयः । शब्दस्पर्शरूपरसगन्धमनो-बुद्धयस्तत्त्वानि । आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यसंवर्तवाडवा अग्नयः । विततसमाञ्जलिशकटविस्तृतयमपाशव्यापकमुद्राः । प्राणापानव्यानोदानसमानाचि-त्ताहंकारजनितपापोपशमनं फलम् ।

याज्ञवल्क्य उवाच—

कति संध्याः के वर्णाः कति स्वरूपाणि ।

ब्रह्मोवाच—

पूर्वा संध्या गायत्री । मध्यमा संध्या सावित्री भवति । पश्चिमा संध्या सावित्री ( सरस्वती ) भवति । उत्तरा संध्या सावित्री भवति । रक्तवर्णा गायत्री । श्वेतवर्णा सावित्री । कृष्णवर्णा सरस्वती । पतिवर्णा तुरीया । प्रातःसंध्या गायत्री बाला कुमारी रक्ताङ्गी रक्तवर्णा रक्तपद्मासनस्था रक्ताम्बर-धरा रक्तगन्धानुलेपना रक्तपुष्पमालाधरा चतुर्मुखा चतुर्भुजा द्विनेत्राऽक्षमालाकम-ण्डलुस्रुवस्रुक्धारिणी सर्वाभरणभूषिता हंसवाहना ऋग्वेदमुद्गिरन्त्याहवनीयमध्यस्था ब्रह्मदैवत्या चतुष्पदाऽष्टकुक्षिः सप्तशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मका-वचा सांख्यायनसगोत्राऽऽदित्यमण्डलगामिनी कालज्ञाने विनियोगः । इत्येषा वै प्रातःसंध्या गायत्री । इति सगुणमूर्ति ध्यात्वा( येत् )। अथ निर्गुणध्यानम्—

हृदि विकसितपद्मं सार्कसोमाग्रबिम्ब-
प्रणवमयमचिन्त्यं यस्य पीठं [ प्र ]कल्प्यम् ।
अचलपरमसूक्ष्मं ज्योतिराकाशसारं
स भवति मनसा मे वासुदेवः प्रतिष्ठा ॥

मध्याह्नसंध्या सावित्री श्वेताङ्गी श्वेतवर्णा श्वेतपद्मासनस्था श्वेताम्बरधरा श्वेतगन्धानुलेपना श्वेतमाल्यधरा पञ्चमुखी त्रिनेत्रा दशभुजा त्रिशूलडमरुपाशासिशङ्खचक्रगदाकपालवरदाभयधारिणी सर्वाभरणभूषिता युवती वृषभवाहना यजुर्वेदमुदाहरन्ती रुद्रदैवत्या गार्हपत्यमध्यस्था चतुष्पदाऽष्टकुक्षिः पञ्चशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मकवचा सांख्यायनसगोत्रा कर्मज्ञाने विनियोगः । इत्येषा वै मध्याह्नसंध्या सावित्री । इति सगुणध्यानम् ।

अथ निर्गुणम्—

हृदयकमलमध्ये दीपवद्वेदसारं
प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् ।
हरिगुरुशिवयोगं सर्वभूतस्थमेकं
सकृदपि मनसा वै ध्यायते यः स मुक्तः ।

सायंसंध्या सरस्वती वृद्धा कृष्णवर्णा कृष्णपद्मासनस्था कृष्णाम्बरधरा कृष्णगन्धानुलेपना कृष्णमाल्यैकमुखी चतुर्भुजा द्विनेत्रा शङ्खचक्रगदापद्मधारिणी सर्वाभरणभूषिता गरुडवाहना सामवेदमुद्गिरन्ती दक्षिणाग्निमध्यस्था विष्णुदैवत्या चतुष्पदाऽष्टकुक्षिः सप्तशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मकवचा सांख्यायनसगोत्रा सम्यग्विज्ञाने विनियोगः । इत्येषा वै सायंसंध्या सरस्वती । इति सगुणध्यानम् । अथ निर्गुणम्—

विष्णुं भास्वच्छरीराङ्गदवलयकलाकल्पहारोदराङ्घ्रिं
श्रोणीभूषं सुवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम् ।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयवास-
मुद्यद्भासं समुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥

उत्तरा संध्या तुरीया पद्मवर्णा पीतपद्मासनस्था पीताम्बरधरा पीतग

न्धानुलेपना पीतमाल्यधरा षण्मुखा षड्भुजा सहस्रनेत्राऽङ्कुशमुष्टिमुद्गरवज्रकलशवरदाभयधारिणी सर्वाभरणभूषितेन्द्रदैवत्या चतुष्पदाऽष्टकुक्षिः सप्तशीर्षाऽग्निमुखा रुद्रशिखा विष्णुहृदया ब्रह्मकवचा सांख्यायनसगोत्रा पूर्णज्ञाने विनियोगः । इत्येषा वै संध्या तुरीया ।

याज्ञवल्क्य उवाच–

मन्त्रो वा यदि वा विप्र संकरो जायते क्वचित् ।
सर्वेषामेव पापानां शोधनं ब्रूहि मे प्रभो ॥

ब्रह्मोवाच–

प्रणवे नित्ययुक्तः स्याच्छिरोव्याहृतिसप्तसु ।
दशप्रणवयुक्तेन अयतं शोभनं उभौ ( ? ) ॥

याज्ञवल्क्य उवाच–

द्वात्रिंशदक्षरगायत्र्याः क ऋषयः कानि छन्दांसि कानि दैवतानि ।

ब्रह्मोवाच–

वामदेवोऽग्निर्वसिष्ठः शुक्रः कण्वः पराशरः ।
विश्वामित्रो महातेजाः कपिलः शौनको महान् ॥
याज्ञवल्क्यो [ महातेजा ] जमदग्निस्तपोनिधिः ।
गौतमो मुद्गलश्चैव वेदव्यासश्च लोमशः ॥
अगस्तिः कौशिको वत्सः पुलस्त्यो माण्डुकस्तथा ।
दुर्वासास्तपतां श्रेष्ठो नारदः कश्यपस्तथा ॥
विमलः शृङ्ग उशना अङ्गिराश्च ऋषिः स्मृतः ।
कुत्सो हारीतकश्चैव मार्कंण्डेयस्तथैत च ॥ इत्येत ऋषयः ।
गायत्र्युष्णिगनुष्टुप् ( च ) बृहती पङ्क्तिरेव च ।
अक्षरपङ्क्तिः कायनी ज्योतिष्मती तथैव च ॥
त्रैष्टुभं जगतीछन्दो सर्वच्छन्दोमहानिधिः ।
भूर्भुवःस्वरिति च्छन्दो दैवी गायत्रीछन्दकम् ॥
अतुलमव्यक्तं प्रकृतीविकृतिः सौकृतिरेव च ।

अष्टिसौम्याकृतिश्चैव समानीति ततः परम् । इत्येतानि च्छन्दांसि प्रथममाग्नेयं द्वितीयं प्राजापत्यं तृतीयं सौम्यं चतुर्थमैशानं पञ्चगमाग्नेयं षष्ठमादित्यं बार्हस्पत्यं सप्तमं मैत्रावरुणमष्टमं भगदैवत्यं नवममार्यमणं दशमं सावित्रमेकादशं त्वाष्ट्रं द्वादशं पौष्णं त्रयोदशं चतुर्दशमैन्द्राग्नं वायव्यं पञ्चदशं वामदेव्यं षोडशं मैत्रावरुणं सप्तदशं भ्रातृव्यमष्टादशं वैश्वदेवमेकोनविंशं वैष्णवं विंशं वासवमेकविंशं रौद्रं द्वाविंशं त्रयोविंशमागस्त्यं वैश्वामित्रं चतुर्विंशं ब्राह्मं पञ्चविंशं मासं षड्विंशं वैद्याधरं सप्तविंशं गायत्रमष्टाविंशं गान्धर्वमेकोनत्रिंशं कैंनरं त्रिंशं कैंपुरुषमेकत्रिंशं ब्राह्मं द्वात्रिंशम् ।

याज्ञवल्क्य उवाच–

कति शक्तयः कति वर्णाः कति तत्त्वानि कति मुद्राः ।

ब्रह्मोवाच–

वामदेवी प्रभा सत्या विश्वमुद्राविलासिनी ।
प्रभावती जया शान्ता कान्ता दुर्गा सरस्वती ॥
विद्रुमा च विशालेया व्याधिनी विमला तथा ।
तमोपहारिणी सूक्ष्मा विश्वयोनिर्जया शिवा ॥
पद्मालया परा शोभा भद्रा च विपदा स्मृता ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही नारसिंही च इन्द्राणी चण्डिका तथा ।
इत्यष्टमातृकाश्चैव तुर्यरूपाश्च शक्तयः ॥
चम्पकातसीपुष्पसंनिभं विद्रुमं तथा ।
स्फटिकाकारकं चैव पद्मपुष्पसमप्रभम् ॥
तरुणादित्यसंकाशं शङ्खकुन्देन्दुसंनिभम् ।
प्रवालपद्मपत्राभं पद्मरागसमप्रभम् ॥
इन्द्रनीलमणिप्रख्यं मौक्तिककुमुदप्रभम् ॥
अञ्जनाभं च रक्तं च वैदूर्यक्षौद्रसंनिभम् ।
केतकीवकुलपुंनागजातीमल्लिकासमम् ॥

करवीरसमं वर्णाः क्रमेण परिकीर्तिताः ।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥
गन्धो रसश्च रूपं च शब्दः स्पर्शस्तथैव च ।
उपस्थपायू पादौ च पाणी वागपि च क्रमात् ॥
घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं च ततः परम् ।
प्राणोऽपानस्तथा व्यानः समानोदान एव च ॥
नागः कूर्मश्च कृकलो वासुकिश्च धनंजयः ।
व्यक्तं चाव्यक्तं तत्त्वं च ज्ञातव्यं तु यथाक्रमम् ॥
सुमुखं संपुटं चैव विततं विस्तृतं तथा ।
द्विमुखं त्रिमुखं चैव चतुष्पञ्चमुखं तथा ॥
षण्मुखाधोमुखे चैव व्यापकाञ्जलिकं तथा ।
शकटं यमपाशं च ग्रथितं चोम्मुखोन्मुखम् ॥
प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मो वराहकम् ।
सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥
त्रिशूलयोनी सुरभिश्चाक्षमाला च लिङ्गकम् ।
अम्बुजं च महामुद्रा तुर्यरूपा प्रकीर्तिता ॥

याज्ञवल्क्य उवाच—

आपो ज्योतिरिति मन्त्रस्य क ऋषिः का देवता किं छन्दः को वर्णः किं तत्त्वं कति शक्तयः कानि बीजानि कति मुद्राः ।

ब्रह्मोवाच—

प्रजापतिर्ऋषिः परमात्मा देवता गायत्री छन्दो दीप्तो वर्णस्तेजस्तत्त्वम् ।

ब्राह्मी खड्गी च वागी च तथा विद्या विलासिनी ।
प्रभावती च लीला च शिरोव्याहृतिशक्तयः ।

वंशंषंहंळंक्षामिति बीजानि ।

पद्मं व्याख्यापकं चैव सुरभिर्योनिरेव च ।
मत्स्यो वराहको लिङ्गं शिरोव्याहृतिमुद्रिकाः ॥

याज्ञवल्क्य उवाच–

यदुक्तं छन्दऋष्यादि देव्याः किंच प्रियं प्रभो ।
कथं न्यासैश्च ब्रह्माण्डं पिण्डे दृश्येत योगिभिः ॥

ब्रह्मोवाच–

विश्वामित्र ऋषिश्चैव देव्या अनुष्टुप्छन्दकम् ।
पिण्डमयं तु ब्रह्माण्डं न्यासरूपं च दृश्यते ॥ अथ न्यासः–
सविता देवता चास्य मुखमग्निरुदाहृतम् ।
ब्रह्मा मूर्ध्नि शिखा विष्णुरात्मा हृदि प्रतिष्ठितः ॥
उदात्तः पृथिवी कुक्षिस्त्रैलोक्यं चरणाावीति ।

याज्ञवल्क्य उवाच–

अवस्था ब्रह्मरूपेण श्रोतुमिच्छामि तत्त्वतः ।
द्वाविंशत्यक्षराणां च अथ न्यासं वद प्रभो ॥

ब्रह्मोवाच–

ऋषिश्छन्दोऽधिदैवं च वर्णं च स्वरयोः क्रमात् ।
बीजानि शक्तिमित्यादि तत्त्वमुद्राः प्रकीर्तिताः ॥
ध्यानं मूर्तिमयं ध्यात्वा मन्त्रार्थगतमानसः ।
सिद्धासनं च वज्रं च अवस्था द्वादश क्रमात् ॥
एताश्च द्वादशावस्था जपकाले तु चिन्तयेत् ।
अन्यथा निष्फलं चैतदिति देवेन भाषितम् ॥

अथार्थन्यासः–द्यौर्मूर्ध्नि । ऋषिर्ब्रह्माण्डे । ब्रह्मा मूर्ध्नि । शिखायां विष्णुः । रुद्रो ललाटे । भ्रुवोर्मध्ये परमात्मा । चक्षुषोश्चन्द्रादित्यौ । कर्णयोः शुक्रबृहस्पती । नासिकयोर्वायुदैवतम् । दन्तपङ्क्तावश्विनौ । उभे संध्ये ओष्ठयोः । मुखेऽग्निः । जिह्वायां सरस्वती । ग्रीवायां तु बृहस्पतिः । स्तनयोर्वसिष्ठः । बाह्वोर्मरुतः । हृदये पर्जन्यः । आकाशमुदरे । नाभावन्तरिक्षम् । कट्योरिन्द्राग्नी । जघने विज्ञानम् । घनः प्रजापतौ । कैलासमलयावूर्वोः । विश्वे देवा जान्वोः । जङ्घायां कौशिकः । गुह्येऽयने । खरेषु पितरः । पादयोः पृथ्वी । वनस्पत-

ष्वङ्गुलीषु । ऋषयो रोमसु । नखेषु मुहूर्ताः । अस्थिषु ग्रहाः । असृङ्मांस-मृत्वर्त्तवः । संवत्सरो वै निमिषे । अहोरात्रं त्वादित्यश्चन्द्रमा देवताः । प्रवरवरदां देवीं दिव्यां गायत्रीं सहस्रनेत्रां शरणमहं प्रपद्ये । ॐ तत्सवितुर्वरदाय नमः। ॐ तत्पूर्वजाय नमः । ॐ तत्प्रातरादित्याय नमः । ॐ तत्प्रातरादित्यप्रतिष्ठितायै नमः। प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । सायं प्रातरधीयानोऽपापो भवति । सर्वेषु तीर्थेषु स्नातो भवति । सर्वैर्देवैर्ज्ञातो भवति । अवाच्यवचनात्पूतो भवति । अभाष्यभाषणात्पूतो भवति - अभक्ष्यभक्षणात्पूतो भवति । अभोज्यभोजनात्पूतो भवति । अचोष्यचोषणात्पूतो भवति । असाध्यसाधनात्पूतो भवति । अलेह्यलेहनात्पूतो भवति । अपेयपाना-त्पूतो भवति । अगम्यागमनात्पूतो भवति । वृषलीगमनात्पूतो भवति । दुष्टप्रति-ग्रहशतसहस्रात्पूतो भवति । सर्वप्रतिग्रहात्पूतो भवति । अनृतवचनात्पूतो भवति । अब्रह्मचारी ब्रह्मचारी भवति । अनेन हृदयेनाधीतेन क्रतुसहस्रेणेष्टं भवति । षष्टिशतसहस्रं गायत्र्या जपित्वा फलानि भवन्ति । अष्टौ ब्राह्मणान्सम्यग्ग्राह-यित्वा तस्य सिद्धिर्भवति । य इदं नित्यमधीयानो ब्राह्मणः शुचिः सर्वपापैः प्रमुच्यत इति [ स ] ब्रह्मलोके महीयत इत्याह भगवान्याज्ञवल्क्यः ।

इति गायत्रीहृदयं समाप्तम् ।

याज्ञवल्क्य उवाच—

स्वामिन्सर्वजगन्नाथ संशयोऽस्ति मम प्रभो ।
चतुःषष्टिकलाभिश्च ( ज्ञः ) पातकाद्योगविद्वरः ।
मुच्यते केन पुण्येन ब्रह्मरूपः कथं भवेत् ।
देहश्च देवतारूपो मन्त्ररूपो विशेषतः ॥
कर्मतः श्रोतुमिच्छामि न्यासं च विधिपूर्वम् ।

ब्रह्मोवाच—

अस्य श्रीगायत्रीकवचस्तोत्रमन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयो ऋग्यजुःसा-माथर्वाणि च्छन्दांसि परब्रह्मस्वरूपिणी गायत्री देवता तद्बीजं भर्गः शक्तिर्धियः कीलकं मोक्षार्थे जपे विनियोगः । ॐ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः ।

ॐ वरेण्यं विष्णवात्मने शिरसे स्वाहा। ॐ भर्गो देवस्य रुद्रात्मने शिखायै वषट्। ॐ धीमहि ईश्वरात्मने कवचाय हुम्। ॐ धियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट्। ॐ प्रचोदयात्परब्रह्मतत्त्वात्मनेऽस्त्राय फट्। ॐ भूर्भुवःस्वरोमिति दिग्बन्धः।

अथ ध्यानम्।

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै-
युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकाम्।
गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे॥

गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे।
ब्रह्मसंध्या तु मे पश्चादुत्तरस्यां सरस्वती॥ १॥
पावकीं च दिशं रक्षेत्पावमानी विलासिनी।
दिशं रौद्रीं च मे पातु रुद्राणी रुद्ररूपिणी॥ २॥
ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा।
एवं दश दिशो रक्षेत्सर्वाङ्गे भुवनेश्वरी॥ ३॥
तत्पदं पातु मे पादौ जङ्घे मे सवितुः पदम्।
वरेण्यं कटिदेशे तु नाभिं भर्गस्तथैव च॥ ४॥
देवस्य मे तु हृदयं धीमहीति च गल्लयोः।
धियःपदं च मे नेत्रे यःपदं मे ललाटके॥ ५॥
नःपदं पातु मे मूर्ध्नि शिखायां मे प्रचोदयात्।
तत्पदं पातु मूर्धानं सकारः पातु भालकम्॥ ६॥
चक्षुषी तु विकारार्णं तुकारस्तु कपोलयोः।
नासापुटे वंकारश्च रेकारस्तु मुखे तथा॥ ७॥
णिकार ऊर्ध्वं ओष्ठे तु यकारस्त्वधरोष्ठके।
आस्यमध्ये भकारस्तु र्गोकाराश्चिबुके तथा॥ ८॥

देकारः कण्ठदेशे तु वकारः स्कन्धदेशके ।
स्यकारो दक्षिणे हस्ते धीकारो वामहस्तके ॥ ९ ॥
मकारो हृदयं रक्षेद्धिकार उदरे तथा ।
धिकारो नाभिदेशे तु योकारस्तु कटिं तथा ॥ १० ॥
गुह्यं रक्षतु योकार ऊरुणी नःपदाक्षरम् ।
प्रकारो जानुनी रक्षेच्चोकारो जङ्घदेशकम् ॥ ११ ॥
दकारो गुल्फदेशेषु याकारः पादयुग्मकम् ।
तकारव्यञ्जनं चैव देवताभ्यो नमो नमः ॥ १२ ॥
इदं तु कवचं दिव्यं बद्ध्वा शत्रून्विनाशयेत् ।
चतुःषष्टिकला विद्या अङ्गाद्यखिलपातकैः ॥
मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति ॥ १३ ॥

इति गायत्रीकवचं समाप्तम् । अथ तान्त्रिकस्तोत्रमुक्तं वसिष्ठसंहितायाम्—

नमस्ते देवि गायत्रि सावित्रि त्रिपदेऽक्षरे ।
अजरे अमरे मातस्त्राहि मां भवसागरात् ॥ १ ॥
नमस्ते सूर्यसंकाशे सूर्यसावित्रिकेऽमले ।
ब्रह्मविद्ये महाविद्ये वेदमातर्नमोऽस्तु ते ॥ २ ॥
अनन्तकोटिब्रह्माण्डव्यापिनि ब्रह्मचारिणि ।
नित्यानन्दे महामाये परेशानि नमोऽस्तु ते ॥ ३ ॥
त्वं ब्रह्मा त्वं हरिः साक्षाद्रुद्रस्त्वमिन्द्रदेवता ।
मित्रस्त्वं वरुणस्त्वं च त्वमग्निरश्विनौ भगः ।
पूषाऽर्यमा मरुत्वांश्च ऋषयोऽपि मुनीश्वराः ।
पितरो नागा यक्षाश्च गन्धर्वाप्सरसां गणाः ॥ ५ ॥
रक्षोभूतपिशाचाश्च त्वमेव परमेश्वरि ।
ऋग्यजुःसामवेदाश्च अथर्वाङ्गिरसानि च ॥ ६ ॥
त्वमेव पञ्च भूतानि तत्त्वानि जगदीश्वरि ।
ब्राह्मी सरस्वती संध्या तुरीया त्वं महेश्वरी ॥ ७ ॥

त्वमेव सर्वशास्त्राणि त्वमेव सर्वसंहिताः ।
पुराणानि च तन्त्राणि महागममतानि च ॥ ८ ॥
तत्सद्ब्रह्म स्वरूपा त्वं किंचित्सदसदात्मिका ।
परात्परेशी गायत्री नमस्ते मातरम्बिके ॥ ९ ॥
चन्द्रे कलात्मिके नित्ये कालरात्रि स्वधे स्वरे ।
स्वाहाकारेऽग्निवक्त्रे त्वां नमामि जगदीश्वरि ॥ १० ॥
नमो नमस्ते गायत्रि सावित्रि त्वां नमाम्यहम् ।
सरस्वति नमस्तुभ्यं तुरीये ब्रह्मरूपिणि ॥ ११ ॥
अपराधसहस्राणि त्वसत्कर्मशतानि च ।
मत्तो जातानि देवेशि त्वं क्षमस्व दिने दिने ॥ १२ ॥
इति गायत्रीस्तोत्रं समाप्तम् ।

एवमेव प्रत्यहं जपसंख्यासमाप्तिदिनपर्यन्तं कुर्यात् । एवं शुभेऽह्नि जपसंख्यां समाप्य हवनसंकल्पं कुर्यात् । तद्यथाऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममेह जन्मनि जन्मान्तरे वा वाङ्मनःकायकृतानां सर्वेषां पापानां शोधनपूर्वकं धर्मार्थकाममोक्षद्वारा सर्वात्मनः सर्वशक्तेः सर्वावभासकतेजोमयस्य परमेश्वरस्य प्रीत्यर्थं निरस्तानर्थस्वरूपप्रकाशचिदानन्दात्मकब्रह्मविद्यायाः सावित्र्याः स्वयमात्मप्रतिनिधित्वेन ब्राह्मणद्वारा वा मया कृतं यच्चतुर्विंशतिलक्षात्मकं पुरश्चरणं तत्संपूर्णफलावाप्तये घृतक्षीरौदनतिलदूर्वाश्वत्थोदुम्बरजटिवटद्रव्याष्टकेन प्रतिद्रव्यं त्रित्रिसहस्रसंख्यहवनाख्यं कर्म करिष्ये । तिलद्रव्येण कृतजपदशांशेनेत्यपरे । तदङ्गविहितं पुण्याहवाचनादि नेच्छन्ति । पूर्वेणैव चरितार्थत्वात् ।

अथ--

कुण्डमण्डपनिर्माणकारिका उपकारिकाः ।
पूर्वग्रन्थानुसारेण लिख्यन्तेऽत्र सतां मुदे ॥ १ ॥
रविरश्मिगतो गवाक्षगो वसुभिर्यः परमाणुभिर्मितः ।
त्रसरेणुरयं तदष्टभी रथरेणुर्विबुधास्तथाऽब्रुवन् ॥ २ ॥

वालाग्रलीक्षे यूका च यवोऽङ्गुलमिति: क्रमात् ।
वितरितर्द्वादशघ्नोऽन्त्यो हस्तोऽसौ द्विगुणस्ततः ॥ ३ ॥
सार्धाङ्गुलोनोऽरत्निः स्यात्सरत्निस्त्र्यङ्गुलोनकः ।

[ इति कुण्डोद्द्योते ] ।

प्रकारान्तरेण—

चेत्खर्वः प्रपदोच्छ्रितः समपदः प्रांशुर्नरोऽप्यूर्ध्वदो-
र्यस्तस्येषुलवः करो जिनलवस्तस्याङ्गुलं वै यवः ।
स्यात्तस्येभलवस्तु तद्वसुलवो यूका च लिक्षा तथा
वालाग्रं रथरेणुरत्र गदितास्तत्तद्गजांशैः क्रमात् ॥ ४ ॥

[ इति कुण्डमार्तण्डे ] ।

भूः शोध्या केशभस्मास्थिकपालाद्यपसारणैः ।
हस्तोन्नतं तदर्धं वा मण्डपस्थलमत्र तु ॥ ५ ॥

भूसमत्वसाधनोपायमाह—

समं हि दण्डद्वयमत्र योज्यं कीलादीनां प्रान्तसमीपतोऽन्यः ।
दण्डस्तिर्यग्योज्य इतीदमित्थं त्र्यस्रं तु तन्मूलनिबद्धसूत्रम् ॥ ६ ॥
भारेण युक्तं च विधाय भूमौ निधाय दण्डद्वयमग्रतोऽस्य ।
सूत्रं तृतीयस्य हि मध्यचिह्ने शङ्कुं स्पृशेच्चेत्सुसमा क्षितिः स्यात् ॥७॥

( इति कुण्डोद्द्योते ) ।

नृपाङ्गुलैः संमितकर्कटेन सूत्रेण वा वृत्तवरं विलिख्य ।
निवेशयेत्स्वाक्षिमिताङ्गुलीभिः ॥ ८ ॥
रव्यङ्गुलं शङ्कुममुष्य मध्ये
चतसृभिश्चैव ऋजूत्तमाभिः संस्पृष्टशीर्षं तु समेषिकाभिः ।
तच्छङ्कुभा यत्र विशेदपेयाद्वृत्ते क्रमात्स्तो वरुणेन्द्रकाष्ठे ॥ ९ ॥

( इति कुण्डसिद्धौ ) ।

सूक्ष्मप्राचीसाधनमाह—

यां काष्ठां रविरेति तत्र चलनं पूर्यादथो यूकया
कीटे कर्कटके वृषेऽपि मकरे नो चालनं कार्मुके ।

युग्मेऽन्यासु तु चालनं परिमितं यूकाद्वयेनोत्तमं
प्राक्चिह्नस्य ततः स्थिराम्बुपदिशः सूत्रस्य पातोऽङ्कतः ॥ १० ॥
( इति कुण्डोद्योते ) ।

दक्षिणोत्तरसाधनमाह—

रज्जुं द्विघ्नां मध्यचिह्नां सपाशां प्राचीशङ्कोः पश्चिमे चापि दत्त्वा ।
कर्षेद्धीमान्दाक्षिणे चोत्तरे च तच्चिह्ने स्याद्दक्षिणा चोत्तरा दिक् ॥ ११ ॥

चतुरस्रसाधनमाह—

दिगन्तशङ्कुद्वयगं द्विपाशं विस्तारतुल्यं तु गुणं दलाङ्के ।
कोणे प्रकर्षेदिति वेदकोणेष्वेवं चतुष्कोणमतीव साधु ॥ १२ ॥

कुण्डसिद्धौ मण्डपप्रारम्भमाह—

विप्रान्संपूज्य सुदिने संवाच्य स्वस्ति पूजयेत् ।
भूवराहानन्तकूर्मानथ मण्डपमालिखेत् ॥ १३ ॥

मण्डपपरिमाणमाह—

स्यान्मण्डपोऽष्टादिकराच्चखान्तो द्विहस्तवृद्ध्याऽत्र तु कर्मपाके ।
आद्यस्तुलादानविधौ तथाऽन्त्यः सर्वेषु कार्येषु विकल्पतोऽन्ये ॥ १४ ॥
( इति कुण्डोद्योते ) ।

द्वारवेदिमानमाह—

दिगन्तराले द्विकरं भवेद्द्वाश्चतुष्टयं वेदगजाङ्गुलैस्तत् ।
विवार्धितं मध्यवरिष्ठयोः स्याद्वेदी त्रिभागेन समा करोच्चा ॥ १५ ॥

स्तम्भनिवेशनमाह—

समत्रित्रिभागे च सूत्रं प्रदद्यादुदग्दक्षिणं चापि पूर्वापरं च ।
ततस्त्र्यंशपूर्तौ च कोणेषु दद्यात्समस्तम्भकान्द्वादशैवेषुहस्तान् ॥ १६ ॥
वेद्याः कोणे हस्तिहस्तोच्चवेदस्तम्भान्दद्याद्वाह्निदिक्कः सचूडान् ।
प्रादक्षिण्यात्पञ्चमांशं तु भूमौ दद्यादेवं षोडशस्तम्भसंस्था ॥ १७ ॥
स्तम्भेषु तिर्यग्वलिका निधेयाश्चूडासु कर्णेष्वथवा बहिस्थाः ।
पौर्वापरं दक्षिणसौम्यदिक्स्थं कोणे तदा काष्ठचयं निदध्यात् ॥ १८ ॥

( इति कुण्डसिद्धौ ) ।

वल्लिकानिवेशनमण्डपाच्छादने आह—

मध्यस्तम्भचतुष्टयोपरि तथा तार्तीयभागादिमाः

कोणेभ्यो वल्लिकाः कटैश्च तनुयात्संछादनं सर्वतः ।

द्वार्वर्जं परितश्छदिर्वसुमितैः काष्ठैरथाप्युच्चयुङ्-

मध्ये कूटमथो कटैः समतया स्यान्मण्डपश्छादितः ॥ १९ ॥

( इति कुण्डोद्द्योते ) ।

तोरणान्याह—

पूर्वादिदिक्षु रचयेदपि तोरणानि

न्यग्रोधजन्तुफलीपप्पलवृक्षराजैः ।

अश्वत्थजन्तुफलपर्कटिभूरिपाद्भि-

र्वैषामभावत इमान्यथवैककेन ॥ २० ॥

हस्ताद्बहिर्मण्डपतः शराङ्कस्वरैः करैस्तान्यधमादिकेषु ।

दीर्घाणि च प्राहुरथाऽऽयतिः स्यात्तेषां द्विहस्ता चरणप्रवृद्ध्या ॥ २१ ॥

स्तम्भार्धमानं फलकं तु तिर्यङ्निवेशविश्वप्रमिताङ्गुलं च ।

तन्मूर्ध्नि कीलाः स्वतुरीयभागनताश्च शूलाकृतयस्तु ते स्युः ॥२२॥

तद्वेशनं द्वित्रियुगाङ्गुसानि शेषे तु विष्णोर्यजनेऽङ्गुलार्धैः ।

कीलेषु शङ्खारिगदाम्बुजाङ्केष्विष्वंशरोपः किल तोरणेषु ॥ २३ ॥

( इति कुण्डसिद्धौ ) ।

पताकावर्णपरिमाणं चाऽऽह—

पीता रक्ता श्यामा कृष्णा श्वेताऽथ धूम्रहरिते स्तः ।

रक्तेत्यष्टौ दिक्षु प्रागीशान्यन्तरेऽभ्रनिभाः ॥ २४ ॥

रक्ता रक्षोम्बुपयोरुन्यस्रा एता मुनिकरदीर्घाः स्युः ।

मुनिकराविस्तृतिमत्यो दशकरवंशैर्युताः कार्याः ॥ २५ ॥

ध्वजानां मानमाह—

ध्वजवैपुल्यं द्विकरं पञ्चकरदीर्घश्चतुष्कोणः ।
मध्ये सकिङ्किणीको ध्वजोऽस्य दीर्घो भवेद्वंशः ॥ २६ ॥

( इति कुण्डोद्द्योते ) ।

प्रकारान्तरेण ध्वजपताकालक्षणम्-

पुच्छं त्र्यस्रि त्रिहस्तं तदुपरि च समं हस्तमात्रं युगास्र-
मूर्ध्वं वैसारिणाभं भवति करमितं मूलभागे द्विहस्तम् ।
एवं पञ्चायिता दिक्पतिसदृशरुचश्चिह्निता वाहनैः स्वै-
र्दीप्यैर्वायुध्वजास्ते दशकरविमितेषूच्चवंशेषु बद्धाः ॥ २७ ॥

( इति कुण्डकल्पद्रुमे ) ।

लोकेशवर्णास्त्रयुताः पताकाः शैलेन्दुदीर्घायतिखाश्च मध्ये ।
चित्रध्वजं दिक्करदैर्घ्ययुक्तं त्रिदोस्ततं प्रान्तककिङ्खिणिकम् ॥ २८ ॥

( इति कुण्डसिद्धौ ) ।

मण्डपमण्डनमाह-

रम्भास्तम्भैराम्रपत्रतोरणैः कुसुमैः फलैः ।
चामरोल्लोचमुकुरैर्मण्डनीयोऽथ मण्डपः ॥ २९ ॥

( इति कुण्डोद्द्योत ) ।

होमप्रधानके कुण्डं चतुःस्तम्भान्तरे खनेत् ।
अन्यत्र मध्ये वेदी स्याच्चतुःस्तम्भान्तरायता ॥ ३० ॥

( इति कुण्डदर्पणे ) ।

कुण्डनिवेशमाह-

प्राच्याश्चतुष्कोणभगेन्दुखण्ड-
त्रिकोणवृत्ताङ्गभुजाम्बुजानि ।
अष्टास्रि शक्रेश्वरयोस्तु मध्ये
वेदास्रि वा वृत्तमुशन्ति कुण्डम् ॥ ३१ ॥

आशेशकुण्डैरिह पञ्चकुण्डी चक्रं हरौ पश्चिमसोमशैवे ।
वेद्याः सपादेन करेण यद्वा पादान्तरेणाखिलकुण्डसंस्था ॥ ३२ ॥

( इति कुण्डसिद्धौ ) ।

वेदास्त्र्यर्धेन्दुवृत्ताब्जमष्टास्रं दिग्भवेषु वा । इति ।

विप्राद्वेदास्रं च वृत्तं च वृत्तार्धं त्र्यस्रि स्याद्वेदकोणानि वाऽपि ।
सर्वाण्याहुवृत्तरूपाणि चान्ये योन्याकाराण्याहुरेके मुनीन्द्राः ॥ ३३ ॥

सिद्धिः पुत्राः शुभं शत्रुनाशः शान्तिर्मृतिच्छिदिः ।
वृष्टिरारोग्यमुक्तं हि फलं प्राच्यादिकुण्डके ॥ ३४ ॥

शतार्धे रत्नि स्याच्छतपरिमितेऽरत्निवितत-
सहस्रे हस्तं स्यादयुतहवने हस्तयुगलम् ।
चतुर्हस्तं लक्षे प्रयुतहवने षट्करमितं
ककुब्भिर्वा कोटौ नृपकरमपि प्राहुरपरे ॥ ३५ ॥

लक्षैकवृद्ध्या दशलक्षकान्तं करैकवृद्ध्या दशहस्तकं च ।
कोट्यर्धदिग्विंशतिलक्षलक्षदले मुनीष्वङ्कुशानुहस्तम् ॥ ३६ ॥

( इति कुण्डसिद्धौ ) ।

प्रकारान्तरम्—

कैश्चिच्छतार्धे च शते शरघ्ने शते सहस्रेऽङ्गुलिभिः क्रमेण ।
नागैः पतङ्गैर्नृपसंमितैश्च नखैर्हि कुण्डानि समीरितानि ॥ ३७ ॥
तथाऽयुताद्द्विगुणितेऽम्बुदान्तं भूबाहुवेदाङ्गगजैर्निरुक्तम् ।
उक्तप्रमाणादधिकोनहोमे त्रैराशिकेनात्र फलं प्रकल्प्यम् ॥ ३८ ॥

( इति कुण्डकल्पद्रुमे ) ।

वेदाक्षीणि युगाग्नयः शशियुगान्यष्टाब्धयस्त्रीषवोऽ-
ष्टाक्षा वह्निरसानगाङ्कमिता नेत्रर्षयोऽक्षस्वराः ।
अङ्गुल्योऽथ यवाः खमभ्रमिषवः खं पञ्च षट् सागराः
सप्ताभ्रं मुनयस्त्वमीति गदिता वेदास्रके बाहवः ॥ ३९ ॥
कुण्डत्रयी दक्षिणयोनिरैन्द्र्याः सौम्याग्रका स्यादितराणि पञ्च ।
पश्चाद्भगानीन्द्रादिगग्रकाणि योनिर्न कोणे न च योनिकुण्डे ॥४०॥

अथ सर्वेषां कुण्डानां प्रकृतिरूपं चतुरस्रकुण्डमाह—

द्विघ्नव्यासं तुर्यचिह्नं सपाशं सूत्रं शङ्कोः पश्चिमे पूर्वगेऽपि ।
दत्त्वा कर्षेत्कोणयोः पाशगुर्ये स्यादेवं वा वेदकोणं समानम् ॥ ४१ ॥

अथ योनिकुण्डमाह–

क्षेत्रे जिनांशे तु परः शरांशान्संवर्ध्य च स्वीयरदांशयुक्तान् ।
कर्णाङ्घ्रिमानेन खिलेन्दुखण्डे प्रत्यवपुरोऽङ्गाद्गुणतो भगाभम् ॥४२॥

वृत्तार्थमाह–

स्वशतांशभूतेषुभागहीनस्वधरित्रीमितकर्कटेन मध्यात् ।
कृतवृत्तदशेऽग्रतश्च जीवां विदधात्विन्दुलवस्य साधु सिद्ध्यै ॥ ४३ ॥

अथ त्र्यस्रिवृत्तकुण्डे आह–

वह्न्यंशं पुरतो विहाय च पुनः श्रोण्योश्चतुर्थांशकं
चिह्नेषु त्रिषु सूत्रदानत इदं स्यात्त्र्यस्रि कष्टोज्झितम् ।
विश्वांशैः स्वजिनांशकेन सहितैः क्षेत्रे जिनांशे कृते
व्यासार्धेन मितेन मण्डलमिदं स्याद्वृत्तसंज्ञं शुभम् ॥ ४४ ॥

अथ षडस्रमाह–

भक्ते क्षेत्रे जिनांशैर्वृतिमितलवकैः स्वाक्षिशैलांशयुक्तै-
व्यासार्धान्मण्डले तन्मितधृतगुणके कर्कटे वेन्दुदिक्तः ।
षट्चिह्नेषु प्रदद्याद्रसमितगुणकानेकमेकं तु हित्वा
नाशे संध्यर्तुदोषामपि तु वृत्तकृते ऐन्द्ररम्यं षडस्रि ॥ ४५ ॥

अथ पद्मकुण्डमाह–

अष्टांशाच्च यतश्च वृत्तशरके तत्राऽऽदिमे कर्णिका-
युग्मेषोडशकेसराणि चरमे स्वाङ्केन्दुभागोनिते ।
भक्ते षोडशधा शरोत्तरधृते स्युः कर्कटेऽष्टौ च्छदाः
सर्वैस्तान्खनकार्णिकान्त्यजनिजाधामोच्चकं स्यात्कजम् ॥ ४६ ॥

अथाष्टास्रि कुण्डमाह–

क्षेत्रे जिनांशे गजचन्द्रभागैः स्वाष्टाश्विभागेन युतैस्तु वृत्ते ।
विदिग्दिशोरन्तरतोऽष्टसूत्रैस्तृतीययुक्तैरिदमष्टकोणम् ॥ ४७ ॥

खातं क्षेत्रसमं प्राहुरन्ये तु मेखलां विना ।
कण्ठो जिनांशमानः स्यादर्कांश इति चापरे ॥ ४८ ॥
अष्टधा विहितकुण्डशरांशैः संखनेद्भुवमुपर्यनलांशैः ।
मेखला विरचयेदपि तिस्रः षड्गजार्कलवविस्तृतपिण्डाः ॥ ४९ ॥
रसांशकादुन्नतविस्तृताश्च तिस्रोऽथ वैका युगभागतुल्या ।
मञ्चाथवा षट्शरवेदरामद्व्यंशैस्ततः स्युर्नव भागपिण्डाः ॥ ५० ॥
आद्याः परास्तच्छरभागहीना जिनांशकण्ठा बहिरेव सर्वाः ।
कुण्डानुकारा अपि मेखलाः स्युरर्काङ्गभागोच्च्यततस्तु नाभिः ॥ ५१ ॥
( इति कुण्डसिद्धौ प्रकारान्तरम् ) ।
वेदाविष्णुपदविक्रमाङ्गुलैरुन्नते च वितते द्विमेखले ।
तन्त्रविद्भिरुदिते रसाङ्गुलैर्वा युगाङ्गुलिभिरेकमेखला ॥ ५२ ॥
( इति कुण्डकल्पद्रुमे ) ।
कुण्डाकारा नाभिरम्भोजसाम्या वाऽब्जे नेयं नांशहानिर्दलाग्रे ।
शेषे क्षेत्रे वह्निवृत्तैः समेते स्युर्वै कर्णी केसराः पत्रकाणि ॥ ५३ ॥
योनिर्व्यासार्धदीर्घा विततगुणलवादायताब्धिद्विभागा
तुङ्गा तावत्समन्तात्परिधिरुपरिगा तावदग्रेण रम्यम् ।
निम्नं कुण्डं विशन्ती वलयदलयुगेनान्विताऽधोविशाला
मूलात्सच्छिद्रनालान्तरवटरुचिराश्वत्थपत्राकृतिः स्यात् ॥ ५४ ॥
( इति कुण्डसिद्धौ ) ।
अथ स्थण्डिलम्—
वेदास्रं बाणमात्रं करमितमथवा रत्निमात्रं श्रुतिभ्यां
तुङ्गं तत्स्यान्मतङ्गैरिषुभिरपि युगैर्द्व्यङ्गुलैर्वाऽङ्गुलेन ।
सूक्ष्माभिर्वालुकाभिर्गदितमरुणमृच्चूर्णकैरल्पहोमे
कुण्डाभावे च नित्येऽल्पावितातिविधुदिशि स्थण्डिलं प्राक्प्लवं च ॥ ५५ ॥

( इति कुण्डकल्पद्रुमे ) ।

इति कारिकाः । एवं कुण्डमण्डपादि संपाद्यात्र स्वस्वशाखीयमन्त्रकलापस्तत्तदनुष्ठाने तत्तद्देवताप्रकाशको ग्राह्यः । तत्र दिङ्मात्रप्रदर्शनार्थं मृग्वेदानुसारेण प्रयोगो लिख्यते । तत्र शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः सपत्नीकः साचार्यर्त्विग्यजमानो मङ्गलघोषेण संपूर्णकलशहस्तः ॐ भद्रं कर्णेभिः, अदितिर्जातमदितिर्जनित्वमित्यादिमन्त्रैर्मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेत् । ततो मण्डपान्तः पश्चिमप्रदेश उपाविश्याऽऽचम्य प्राणानायम्य देशकालौ स्मृत्वा गायत्रीपुरश्चरणहवनाङ्गत्वेन मण्डपादिदेवतास्थापनं करिष्ये । ततो गणपतिं संपूज्याऽऽचार्यो गौरसर्षपान्सर्वतो मण्डपान्ते विकिरेत् । तत्र मन्त्रः–

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥

अपक्रामन्तु भूतानि० । ततः पञ्चगव्येन कुशैः सर्वत्र प्रोक्षणं शुची को हव्येत्यापो हि ष्ठेति तृचेन( च ) कार्यम् । ततः कृताञ्जलिः स्वस्त्ययनं तार्क्ष्यमिति मन्त्रद्वयं पठेत् । ततो मण्डपनैर्ऋत्यां हस्तमात्रायतां समचतुरस्त्रां चतुरङ्गुलोत्सेधां मृदा वेदीं( दिं ) कृत्वेशान्यादिषु–

विशन्तु भूतले नागा लोकपालाश्च सर्वतः ।
मण्डपेऽत्रावतिष्ठन्तु आयुर्बलकराः सदा ॥

इति चतुरः शङ्कूनरोपयित्वा तत आग्नेय्यां दिशि शङ्कुपार्श्वे भक्तबलिं दद्यात्–

अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः ।
तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ इति ।

एवं मन्त्रत्रयेण नैर्ऋतिवायव्यैशानीषु शङ्कुपार्श्वे भक्तबलीन्प्रदद्यात् । तत्र मन्त्राः–

नैर्ऋत्यधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः ।
तेभ्यो बलिं प्रयच्छामि सर्वे गृह्णन्तु मन्त्रितम् ॥
ॐ नमो वायुरक्षेभ्यो ये चान्ये तत्समाश्रिताः ।

बलिं तेभ्यः प्रयच्छामि सर्वे गृह्णन्तु मन्त्रितम् ॥
ॐ रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्य तत्समाश्रिताः ।
बलिं तेभ्यः प्रयच्छामि गृह्णन्तु सततोत्सुकाः ॥

वस्त्रे सुवर्णादिशलाकया शान्ता १ यशोवती २ कान्ता ३ विशाला ४ प्राणवाहिनी ५ सती ६ वसुमती ७ नन्दा ८ सुभद्रा ९ इति प्रागायता नव रेखाः कृत्वा पुनः हिरण्या १ सुव्रता २ लक्ष्मीः ३ विभूतिः ४ विमला ५ प्रिया ६ जया ७ काली ८ विशोका ९ चेति नव दक्षिणोत्तरायताः कृत्वा मध्यचतुष्टयमेकीकृत्य कोणेषु रेखां कृत्वा देवता आवाहयेत् । मध्यमपदचतुष्के हृदये ब्रह्माणमावाहयामि । एवमग्रेऽपि । पूर्वपदद्वये दक्षिणस्तनेऽर्यमणमावाहयामि दक्षिणपदद्वये जठरे दक्षिणे विवस्वन्तमावाहयामि । पश्चिमपदद्वये जठरे वामे मित्रमावाहयामि । उदक्पदद्वये वामस्तने पृथ्वीधरमावाहयामि । आग्नेयपदार्धयोर्दक्षिणहस्ते सावित्रसवितारावावाहयामि । नैर्ऋत्यपदार्धयोर्वृषणमेढ्र्योर्विबुधाधिपजयावावाहयामि । वायव्यपदार्धयोर्वामहस्ते राजयक्ष्मरुद्रावावाहयामि । ऐशान्यपदार्धयोरुरोमुखयोरपापवत्सावावाहयामि । ऐशान्यपदे दक्षिणार्धे शिरसि शिखिनगावाहयामि । तद्दक्षिणसार्धपदे दक्षिणनेत्रे पर्जन्यमावाहयामि । तद्दक्षिणपदद्वये दक्षिणश्रोत्रे जयन्तमावाहयामि । तद्दक्षिणपदद्वये दक्षिणांसे कुलिशायुधमावाहयामि । तद्दक्षिणपदद्वये दक्षिणबाहौ सूर्यमावाहयामि । तद्दक्षिणपदद्वये दक्षिणबाहावेव सत्यमावाहयामि । तद्दक्षिणसार्धपदे दक्षिणकूर्परे भृशमावाहयामि । तद्दक्षिणाग्नेयपदार्धे दक्षिणबाहावाकाशमावाहयामि । तत्पश्चिमाग्नेयपदार्धे दक्षिणबाहौ वायुमावाहयागि । तत्पश्चिमसार्धपदे दक्षिणमणिबन्धे पूषणमावाहयामि । तत्पश्चिमपदद्वये दक्षिणपार्श्वे वितथमावाहयामि । तत्पश्चिमपदद्वये दक्षिणपार्श्वे एव गृहक्षतमावाहयामि । तत्पश्चिमपदद्वये दक्षिणोरौ यममावाहयामि । तत्पश्चिमपदद्वये दक्षिणजानौ गन्धर्वमावाहयामि । तत्पश्चिमसार्धपदे दक्षिणजङ्घायां भृङ्गराजमावाहयामि । तत्पश्चिमनैर्ऋत्यपदार्धे दक्षिणास्फिचि मृगमावाहयामि । तदुत्तरार्धपदे पादयोः पितॄनावाहयामि । तदुत्तरसार्धपदे वामस्फिचि दौवारिकमावाहयामि । तदुत्तरपदद्वये वामजङ्घायां सुग्रीवमावाहयामि । तदुत्तरपदद्वये वाम-

जानौ पुष्पदन्तमावाहयामि। तदुत्तरपदद्वये वामोरौ वरुणमावाहयामि। तदुत्तर पदद्वये वामपार्श्वेऽसुरमावाहयामि। तदुत्तरसार्धपदे मामपार्श्व एव शोषमावाहयामि, तदुत्तरवायव्यपदार्धे वाममणिबन्धे पापमावाहयामि। तत्प्राक्पदार्धे वामप्रबाहौ रोगमावाहयामि। तत्प्राक्सार्धपदे वामप्रबाहावेवाहिमावाहयामि तत्प्राक्पदद्वये वामकूर्परे मुख्यमावाहयामि। तत्प्राक्पदद्वये वाम॰ाहौ भिल्लाटमावाहयामि। तत्प्राक्पदद्वये वामबाहावेव सोममावाहयामि। तत्प्राक्पदद्वये वामांसे सर्पमावाहयामि। तत्प्राक्सार्धपदे वामश्रोत्रेऽदितिमावाहयामि। तत्प्रागर्धपदे दितिमावाहयामि। उत्तरे वास्तोष्पते इति वास्तु ( पुरुष ) मावाहयामि। वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुब्वास्तोष्पत्यावाहने विनियोगः। ॐ वास्तोष्पते प्र०। तत ऐशान्यादिविदिक्षु चरकीमावाहयामि। विदारीमावाहयामि। पूतनामावाहयामि। पापराक्षसीमावाहयामि। पूर्वादिदिक्षु स्कन्दमावाहयामि। अर्यमणमावाहयामि। जृम्भकमावाहयामि। पिलिपिच्छमावाहया[मि]। तदस्तु मित्रा०। गृहा वै०। एवमावाहितदेवताः संपूज्य तदैशान्यां कलशं स्थापयेत्। होमपक्षे तत्पश्चिमे स्थण्डिले ब्रह्मादिदेवता औदुम्बरसमित्तिलयवचर्वाज्यद्रव्यैः प्रतिद्रव्यमष्टाष्टसंख्यया होमयेत्। वास्तोष्पतिमुक्तद्रव्यैरष्टाविंशतिसंख्यया। वास्तोष्पते ध्रुवा स्थूणामिति चाष्टोत्तरशतं बिल्वफलैस्तद्धविर्भिर्वा चरक्यादिदेवता एकैकयाऽऽज्याहुत्या। एतदसंभवे सर्वेषां पायसबलिं दद्यात्। ततश्चरक्या एतं माषभक्तबलिं समर्पयामि: एवं सर्वत्र बलिदानं कृत्वा पावमानीभी रक्षोहणमिति सूक्तेन च मण्डपस्य त्रिः सूत्रवेष्टनं कुर्यात्। ततो दुग्धधारां जलधारां च पातयेत्। ततस्तोरणादिपूजां करिष्य इति [ संकल्प्य ] पूर्वस्यां दिशि मण्डपद्वाराद्बहिर्हस्तमात्राश्वत्थतोरणं सुदृढनामकं शोभनन मकं वा शङ्खचिह्नितम्। ॐ अग्निमीळे, इत्यृचा सुदृढतोरणाय नमः सुदृढतोरणमावाहयामि। सुदृढतोरणाय नमः ( इति ) गन्धाद्युपचारैः पूजयेत्। तत्र राहुमावाहयामि बृहस्पतिमावाहयामि। राहुबृहस्पतिभ्यां नमो गन्धाद्युपचारान्समर्पयामीति। तत्रैकः कलशः स्थाप्यः। तत्र मन्त्राः—मही द्यौरिति भूमिं स्पृष्ट्वौषधयः समिते यवाना कलशेष्विति कलशं संस्थाप्येमं मे गङ्ग इति जलमापूर्य गन्धद्वारामिति गन्धं क्षिप्त्वा या ओषधीरिति सर्वौषधीः

काण्डात्काण्डादिति दूर्वा अश्वत्थेव इति पञ्च पल्लवान्स्योना पृथिवीति सप्त मृदो याः फलिनीरिति फलं स हि रत्नानीति रत्नं हिरण्यरूप इति हिरण्यं युवा सुवासा इति वस्त्रं पूर्णा दर्वीत्युपरिधान्यं पूर्णपात्रं न्यसेत् । ततो दक्षिण औदुम्बरं सुभद्रं विकटं वा चक्रचिह्नितं तोरणम् ' ॐ इषे त्वोर्जे त्वा वायवः स्थो पायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ' इति मन्त्रेण सुभद्रतोरणमावाहयेत् । सुभद्रतोरणाय नमो गन्धाद्युपचारान्समर्पयामि । तत्र सूर्यमावाहयामि । अङ्गारकमावाहयामि । सूर्याङ्गारकाभ्यां नमो गन्धाद्युपचारान्० । ततः पूर्ववदेव कलशस्थापनम् । तत्र धरायै नमो धरामावाहयामि । धरायै नमो गन्धाद्युपचारान्० । ततः पश्चिमे प्लाक्षं सुगीमं सुकर्मनामकं वा गदाचिह्नितं तोरणमग्न आयाहि० सुकर्मतोरणाय नमः सुकर्मतोरणमावाहयामि । सुकर्मतोरणाय नमो गन्धाद्युपचारान्० । तत्र शुक्रमावाहयामि । बुधमावाहयामि । शुक्रबुधाभ्यां नमो गन्धाद्युपचारान्० । तत्र पूर्ववत्कलशस्थापनम् । तत्र वाक्पतये नमो वाक्पतिमावाहयामि । वाक्पतये नमो गन्धाद्युपचारान्० । तदुत्तरे वाटसुप्रभं सुहोत्रनामकं वा पद्मचिह्नितं तोरणं शं नो देवीर० । सुहोत्रतोरणाय नमः सुहोत्रतोरणमावाहयामि । सुहोत्रतोरणाय नमो गन्धाद्युपचारान्० । तत्र सोममावाहयामि । केतुमावाहयामि । शनैश्चरमावाहयामि । सोमकेतुशनैश्चरेभ्यो नमो गन्धाद्युपचारान्० । तत्र पूर्ववत्कलशस्थापनम् । तत्र विघ्नेशाय नमो विघ्नेशमावाहयामि । विघ्नेशाय नमो गन्धाद्युपचारान्० । ततः पूर्वद्वारे कलशद्वयं मही द्यौरित्यादिमन्त्रैः स्थापयेत् । प्रतिकलशं मन्त्रावृत्तिः । ऐरावतं कलशद्वये न्यसेत्पूजयेच्च । अस्मिन्कलशद्वय ऐरावतमावाहयामि । ऐरावताय नमो गन्धाद्युपचारान्० । तत्र ऋग्वेदिनावृत्विजौ पूर्वद्वारे शान्तिसूक्तजपार्थे त्वामहं वृणे ।

> ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः ।
> अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥

इति प्रत्येकं वृत्वाऽग्निमीळे पुरोहितमिति मन्त्रेण प्रत्येकं गन्धाद्यैरुपचारैः पूजयेत् । ततः सहस्राक्षमैरावतस्थितं पीतं किरीटकुण्डलधरं दक्षिणवामकरस्थवज्रोत्पलमिन्द्रं ध्यात्वा—

एह्येहि सर्वाम सिद्धसाध्यैरभिष्टुतो वज्रधरामरेश ।
संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥

भो इन्द्रेहाऽऽगच्छेह तिष्ठेन्द्रं साङ्गं सपरिवारं सायुधं सशक्तिकं द्वारकलश आवाहयामि । आशुः शिशान इति मन्त्रेण पीतां पताकां पीतध्वजं च द्वयमपि दशहस्तदण्डं पञ्चहस्तदण्डं वोच्छ्रयेत् । ततस्त्रातारमिन्द्र० इन्द्राय० गन्धाद्युपचारैः पूजयेत् ।

इन्द्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः ।
शतयज्ञोऽधिपो देवस्तस्मै नित्यं नमो नमः ॥

इति नत्वेन्द्राय साङ्गाय सपरिवाराय सायुधायेमं माषभक्तबलिं समर्पयामीति बलिं दद्यात् । तत आचम्याऽऽग्नेय्यां गत्वा पूर्ववत्कलशं स्थापयित्वा तत्र पुण्डरीकममृतं चाऽऽवाह्य पुण्डरीकामृताभ्यां नमो गन्धाद्युपचारान्समर्पयामीति समर्पयेत् ।

छागस्थं रक्तं दक्षिणवामकरधृतशक्तिकमण्डलुं यज्ञोपवीतिनमग्निं ध्यात्वा—

एह्येहि सर्वामरहव्यवाह मुनिप्रवर्यैरभितो ह जुष्ट ।
तेजोवता लोकगणेन सार्धं ममाध्वरं पाहि कवे नमस्ते ॥

भो अग्न इहाऽऽगच्छेह तिष्ठाग्निं साङ्गं सपरिवारं सायुधं सशक्तिकं कलश आवाहयेत् । अग्निं दूतमिति मन्त्रेण रक्तां पताकां ध्वजं चोच्छ्रयेत् । ततस्त्वं नो अग्ने० इति मन्त्रेणाग्नये गन्धाद्युपचारान्समर्पयेत् ।

आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः ।
धूमकेतुरजोऽध्यक्षस्तस्मै नित्यं नमो नमः ॥

इति नत्वाऽग्नये साङ्गायेत्यादि बलिं दद्यात् । तत आचम्य दक्षिणे गत्वा प्रतिद्वारशाखं पूर्ववन्मन्त्रैः कलशद्वयं स्थापयित्वा तत्र कलशद्वये वामननामकं दिग्गजमावाहयेत् । वामनदिग्गजाय० गन्धाद्युपचारान् । तत्र यजुर्वेदिनावृत्विजौ दक्षिणद्वारे शान्तिसूक्तजपार्थं त्वामहं वृणे ।

कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः ।
काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥

इति प्रत्येकं वृत्वा ' इषे त्वोर्जे त्वा ' इति मन्त्रेण तौ गन्धादिभिरभ्यर्च-
त्। ततो महिषारूढं घृतदण्डपाशदाक्षिणवामकरद्वयं कृष्णाञ्जनचयोपममग्निस-
लोचनं यमं ध्यात्वा—

एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते।
शुभाशुभानन्दशुचामधीश शिवाय नः पाहि मखं नमस्ते॥

भो यमेहाऽऽगच्छेह तिष्ठ यमं साङ्गं सपरिवारं सायुधं सशक्तिकं द्वारक-
लश आवाहयेत्। आयं गौः पृश्नि० इति मन्त्रेण कृष्णां पताकां कृष्णध्वजं
चोच्छ्रयेत्। ततो यमाय सोमं० यमाय नमो गन्धाद्युपचारैः संपूजयामीति पूज-
येत्।

महामहिषमारूढं दण्डहस्तं महाबलम्।
आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम्॥

इति यमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायैतं माषभक्तबलिं
समर्पयामीति समर्पयेत्। तत आचम्य नैर्ऋत्यां पूर्ववत्कलशं संस्थाप्य तत्र कुमुदं
दुर्जयं चाऽऽवाहयेत्। कुमुददुर्जयाभ्यां नम इति गन्धाद्युपचारान्समर्पयेत्। ततो
नरारूढं महाकालं खड्गहस्तं महाबलं नीलं बहुराक्षसवेष्टितं पीताभरणभूषितं
निर्ऋतिं ध्यात्वा -

एह्येहि रक्षोगणनायक त्वं विशालवेतालपिशाचसंघैः।
ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते॥

भो निर्ऋत इहाऽऽगच्छेह तिष्ठ निर्ऋतिं साङ्गं सपरिवारं सशक्तिकं कलश
आवाहयामि। मोषुणः परापरेति मन्त्रेण नीलां पताकां नीलध्वजं चोच्छ्रयेत्।
असुन्वन्तमयजमानमिति निर्ऋतये गन्धाद्युपचारान्०।

निर्ऋतिं खड्गहस्तं च सर्वलोकैकपावनम्।
आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम्॥

इति नत्वा निर्ऋतये साङ्गाय० बलिं समर्पयामीति समर्पयेत्। तत
आचम्य पश्चिमे गत्वा कलशद्वयं प्रतिद्वारशाखं पूर्ववत्स्थापयित्वाऽस्मिन्कलशद्व

येऽञ्जनाख्यादिग्गजमावाहयेत् । अञ्जनाख्यादिग्गजाय नम इति गन्धाद्युपचारान्० । तत्र सामवेदिनावृत्विजौ पश्चिमद्वारे शान्तिसूक्तजपार्थे त्वामहं वृणे ।

सामवेदस्तु पिङ्गाक्षो जागतः शक्रदेवतः ।
भरद्वाजस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥

इति प्रत्येकं वृत्वा अग्न आ याहि वी० इति मन्त्रेण गन्धाद्युपचारान्समर्पयेत् । ततो मकरस्थं पाशहस्तं शुक्लवर्णं किरीटधारिणं वरुणं ध्यात्वा–

एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसमाप्सरोभिः ।
विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते ॥

भो वरुणेहाऽऽगच्छेह तिष्ठेति वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकं द्वारकलश आवाहयेत् । इमं मे वरुण० इति मन्त्रेण श्वेतां पताकां श्वेतध्वजं चोच्छ्रयेत् । तत्त्वा यामि० वरुणाय नमो गन्धाद्युपचारान् ।

पाशहस्तं च वरुणमम्भसां पतिमीश्वरम् ।
आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥

इति नत्वा वरुणाय साङ्गाय० बलिं दद्यात् । तत आचम्य वायव्यां पूर्ववत्कलशं निधाय तत्र पुष्पदन्तमावाहयामि सिद्धार्थमावाहयामीत्यावाह्य पुष्पदन्तसिद्धार्थौ गन्धाद्युपचारैः पूजयेत् । मृगारूढं धूम्रवर्णं चित्राम्बरधरं युवानं वरध्वजदक्षिणवामकरद्वयं वायुं ध्यात्वा–

एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः ।
प्राणाधिपः कालकवेः सहाय गृहाण पूजां भगवन्नमस्ते ॥

भो वायो इहाऽऽगच्छेह तिष्ठ वायुं साङ्गं सपरिवारं सायुधं सशक्तिकं कलश आवाहयेत् । वायो शतमिति मन्त्रेण धूम्रां पताकां धूम्रध्वजं चोच्छ्रयेत् । तव वायवृतस्पते० वायवे नम इति गन्धाद्युपचारान्समर्पयेत् ।

वायुमाकाशगं चैव पवनं वेगवद्गतिम् ।
आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥
अनगारो महौजाश्च यश्चादृष्टगतिर्दिवि ।
तस्मै पूज्याय जगतो वायवेऽहं नमामि च ॥

इति नत्वा वायवे साङ्गायेत्यादि० बलिं दद्यात् ।। तत आचम्योत्तरद्वारं गत्वा कलशद्वयं प्रतिद्वारशाखं प्राग्वत्स्थापयित्वा तत्र कलशद्वये सार्वभौमदिग्गजमावाहयेत् । सार्वभौमदिग्गजाय नम इति गन्धाद्युपचारान्समर्पयेत् । तत्राथर्ववेदिनावृत्विजावुत्तरद्वारे शान्तिसूक्तजपार्थे त्वामहं वृणे ।

बृहश्चेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः ।
वैशंपायन विप्रेन्द्र ऋत्विक त्वं मे मखे यव ॥

इति प्रत्येकं वृत्वा शं नो देवीरिति मन्त्रेण गन्धाद्युपचारान्समर्पयेत् । ततो नरयुतं विमानस्थं कुण्डलहारकेयूररुचिरं वरगदाधरदक्षिणवामभुजद्वयं मुकुटिनं महोदरं महाकायं हरितवर्णं कुबेरं ध्यात्वा-( ? )

एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्धम् ।
सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥

भोः सोमेहाऽऽगच्छेह तिष्ठ सोमं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयेत् । आप्यायस्वेति मन्त्रेण हरितां पताकां हरितध्वजं चोच्छ्रयेत् । सोमो धेनुं० सोमाय नम इति गन्धाद्युपचारान्समर्पयेत् ।

सर्वनक्षत्रमध्ये तु सोमो राजा व्यवस्थितः ।
तस्मै सोमाय देवाय नक्षत्रपतये नमः ॥

इति नत्वा सोमाय साङ्गायेत्यादि० बलिं दद्यात् । तत आचम्यैशान्यां गत्वा पूर्ववत्कलशं निधाय तत्र सुप्रतीकमावाहयामि मङ्गलमावाहयामि । सुप्रतीकमङ्गलाभ्यां नम इति गन्धाद्युपचारान्समर्पयेत् । वृषारूढं दक्षिणवामहस्तयोर्वरत्रिशूलधरं त्रिनेत्रं शुक्लवर्णमीशानं ध्यात्वा-

एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वाङ्गधरेण सार्धम् ।
लोकेन यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥

भो ईशानेहाऽऽगच्छेह तिष्ठेशानं साङ्गं सपरिवारं सायुधं सशक्तिकं कलश आवाहयेत् । अभि त्वा देव सवि० इति मन्त्रेण श्वेतपताकां सर्ववर्णध्वजं चोच्छ्रयेत् । तमीशानं० ईशानाय गन्धाद्युपचारान्समर्पयेत् ।

वृषस्कन्धसमारूढं शूलहस्तं त्रिलोचनम् ।
आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥
सर्वाधिपो महादेव ईशानः शुक्ल ईश्वरः ।
शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमो नमः ॥

इति नत्वेशानाय साङ्गायेत्यादि बलिं दद्यात् ।
तत आचम्येशानपूर्वयोर्मध्येऽध उद्दिश्य–

अनन्तशयनासीनं फणासप्तकमण्डितम् ।
पद्मशङ्खधरोर्ध्वाधोदक्षवामकरद्वयम् ॥

चक्रगदाधरोर्ध्वाधोवामकरद्वयं नीलवर्णमनन्तं ध्यात्वा–

एह्येहि पातालधरामरेन्द्र नागाङ्गनाकिंनरगीपमान ।
यक्षोरगेन्द्रापरलोकसंघैरनन्त रक्षाध्वरमस्मदीयम् ॥

भो अनन्तेहाऽऽगच्छेह तिष्ठानन्तं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयेत् । आयं गौरिति मन्त्रेण मेघवर्णां पताकां श्वेतध्वजं चोच्छ्रयेत् । आयं गौरिति मन्त्रेणानन्ताय गन्धाद्युपचारान्समर्पयेत् ।

योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ।
पुष्पवद्धारयेन्मूर्ध्नि तस्मे नित्यं नमो नमः ॥

इति नत्वाऽनन्ताय साङ्गायेत्यादि० बलिं दद्यात् । तत आचम्य नैर्ऋत्यपश्चिमयोर्मध्य ऊर्ध्वमुद्दिश्याक्षसूत्रकुशमुष्टिधरोर्ध्वाधोदक्षिणकरं स्रुवकमण्डलुधरोर्ध्वाधोदाक्षिणवामकरं चतुर्मुखं श्मश्रुलं जटिलं लम्बोदरं रक्तवर्णं ब्रह्माणं ध्यात्वा–

एह्येहि सर्वाधिपते सुरेन्द्र लोकेन सार्धं पितृदेवताभिः ।
सर्वस्य धाताऽस्यमितप्रभावो विशाध्वरं नः सततं शिवाय ॥

भो ब्रह्मन्निहाऽऽगच्छेह तिष्ठेति ब्रह्माणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयेत् । ब्रह्म जज्ञानमिति रक्तपताकां रक्तध्वजं चोच्छ्रयेत् । ब्रह्म जज्ञानमिति मन्त्रेण ब्रह्मणे गन्धाद्युपचारान्समर्पयेत् ।

पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पितामहः ।
यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमो नमः ॥

इति नत्वा ब्रह्मणे साङ्गायेत्यादि० बलिं दद्यात् । तत आचम्य मण्डपमध्येऽत्युच्चदण्डो दशहस्तदीर्घस्त्रिहस्तविस्तृतो महाध्वजो विचित्रवर्ण इन्द्रस्य वृष्णो० इति मन्त्रेण स्थाप्यस्तत्र ब्रह्म जज्ञानमिति मन्त्रेण ब्रह्माणमावाह्य ब्रह्मणे नम इति गन्धाद्युपचारान्समर्पयेत् । ततो मण्डपषोडशस्तम्भेषु सर्वेभ्यो देवेभ्यो नमो वंशेषु किंनरेभ्यो नमः पृष्ठेषु पन्नगेभ्यो नम इति पूजयेत् । ततः पूर्वस्यां दिशि मण्डपाद्बहिः किंचिद्भूमिमुपलिप्य तत्रोपविश्य—

त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्णुशिवैः सार्धं रक्षां कुर्वन्तु तानि मे ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
ऋषयो मुनयो गावो देवमातर एव च ॥
सर्वे ममाध्वरे रक्षां प्रकुर्वन्तु मुदाऽन्विताः ।
ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालगणैः सह ॥
रक्षन्तु मण्डपे सर्वे घ्नन्तु रक्षांसि सर्वतः ।

त्रैलोक्यस्थेभ्यः स्थावरेभ्यो भूतेभ्यो नमः । ॐ ब्रह्मणे नमः । ॐविष्णवे नम । ॐ शिवाय नमः । ॐ देवेभ्यो नमः । ॐ दानवेभ्यो नमः । ॐ गन्धर्वेभ्यो नमः । ॐ यक्षेभ्यो नमः । ॐ राक्षसेभ्यो नमः । ॐ पन्नगेभ्यो नमः । ॐ गोभ्यो नमः । ॐ ऋषिभ्यो नमः । ॐ मनुष्येभ्यो नमः । ॐ देवमातृभ्यो नमः । इति प्रत्येकं गन्धाद्युपचारान्प्रत्येकं माषभक्तबलिं समर्पयामीति [ च ] बलिं दद्यात् । ततो यजमानः साचार्यर्त्विक् प्रक्षालितपाणिपाद आचान्तः प्राग्द्वारेण मण्डपं प्रविशेत् । ततो यजमानोऽग्न्यायतनाद्दक्षिणत उपविशेत् । आचार्यस्तु पूर्वस्यां दिशि पूर्ववेदिं विधाय तत्र नित्यवत्सर्वदेवतास्थापनादिकं निर्वर्त्य ततोऽग्निस्थापनादि कुर्यात् । अन्ये त्वग्निस्थापनानन्तरं ग्रहस्थापनं तदनन्तरं तदुत्तरे मुख्यदेवतास्थापनमिच्छन्ति । अपरे नित्यपूजाकल्पितवेदिकायामेव देवतापूजनादिकं कृत्वा तदुत्तरं मण्डपेऽग्निस्थापनपूर्वकं ग्रहस्थापनमिच्छन्ति ।

अत्र यथासंप्रदायं कर्तव्यम् । तत आचार्यः कुण्डपश्चिम उपाविश्याऽऽचम्य प्राणानायम्यास्मिन्कर्मण्यग्निप्रतिष्ठां करिष्ये तदङ्गतया संमार्जनमेखलायोनिदेवतास्थापनं च करिष्य इति संकल्प्याग्न्यायतनं संमृश्य कुशोदकेन प्रोक्ष्य इदं विष्णुरिति मन्त्रेणोपरिमेखलायां श्वेतवर्णालंकृतायां विष्णुमावाहयेत् । मध्यमेखलायां रक्तवर्णालंकृतायां ब्रह्म जज्ञानमिति मन्त्रेण ब्रह्माणमावाहयेत् । अधोमेखलायां कृष्णवर्णालंकृतायां कद्रुद्रायेति मन्त्रेण रुद्रमावाहयेत् । विष्णवे ब्रह्म० रुद्राय गौर्यै नम इति प्रत्येकं गन्धाद्युपचारान्० । ततः कुण्डे स्थण्डिले वाऽग्निं प्रणयेत् । तच्चेत्थं—यज्ञियशकलमादाय दक्षिणेन हस्तेनोक्तप्रकारेणोल्लिख्य कुण्डमद्भिरभ्युक्ष्य शकलमाग्नेय्यां निरस्य पाणी प्रक्षाल्य वाग्यतो भवेत् । जुष्टोदमूना आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप्पिधानोद्धरणे विनियोगः । ॐ जुष्टो दमूना० । एह्यग्न राहूगणो गोतमोऽग्निस्त्रिष्टुबग्न्यावाहने विनियोगः । ॐ एह्यग्न इह होता० । अग्निनाऽग्निः कण्वो मेधातिथिरग्निर्गायत्र्यग्निप्रातिष्ठापने विनियोगः । ॐ अग्निनाऽग्निः स० । ॐ भूर्भुवःस्वरोमित्यग्निं प्रतिष्ठाप्य चत्वारि शृङ्गेति मन्त्रस्य गौतमो वामदेवोऽग्निस्त्रिष्टुबग्निमूर्तिध्याने विनियोगः । चत्वारि शृङ्ग० । इत्यग्निं ध्यात्वा कपिलजटाग्ने वैश्वानर शाण्डिल्यगोत्र मेषध्वज प्राङ्मुख मम संमुखो भव [ इति प्रार्थ्य ] । ततो ग्रहवेद्यां देवतास्थापनं कुर्यात् । सा च कुण्डात्षट्त्रिंशदङ्गुलोपरीशानभागे हस्तविस्तृता समचतुरस्रा प्रागुदक्प्रवणा वप्रत्रयोपेता दशाङ्गुलोच्चा कार्या । तस्याः प्रथमो वप्रो द्व्यङ्गुलोच्छ्रायो द्वितीयतृतीयौ त्र्यङ्गुलोच्छ्रायौ त्रयोऽपि द्व्यङ्गुलविस्ताराः कार्याः । एवं च वप्रैः सहाष्टादशाङ्गुलोच्छ्रिता भवति । तस्यां च देवतावाहनं कुर्यात् । तत्र सर्वतोभद्रप्रकारमाह—

प्रागुदीच्यायता रेखाः कुर्यादेकोनविंशतिम् ।
खण्डेन्दुस्त्रिपदः कोणे शृङ्खला पञ्चभिः पदैः ॥
एकादशपदा वल्ली भद्रं तु नवभिः पदैः ।
चतुर्विंशत्पदा वापी परिधिर्विंशकैः पदैः ॥
मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् ।

श्वेतेन्दुः शृङ्खला कृष्णा वल्लीं नीलेन पूरयेत् ॥
भद्राऽरुणा सिता वाऽपि परिधिः पीतवर्णकः ।
बाह्यान्तरदला श्वेता कर्णिका पीतवर्णका ॥
परिध्यावेष्टितं पद्मं बाह्ये सत्त्वं रजस्तमः ।
तन्मध्ये स्थापयेद्देवान्ब्रह्माद्यांश्च सुरासुरान् ॥ इति ।

तत्र पञ्चवर्णान्युक्तानि पञ्चपात्रे—

रजांसि पञ्चवर्णानि मण्डलार्थं हि कारयेत् ।
शालितण्डुलचूर्णेन शुक्लं वाऽऽयससंभवम् ॥
रक्तं कुसुम्भसिन्दूरगैरिकादिसमुद्भवम् ।
हरिद्रावोद्भवं पीतं रजनीसंभवं क्वचित् ॥
कृष्णं दग्धयवैः कार्यं हरितं पीतकृष्णजम् ।

रजनी हरिद्रा । एवं निष्पाद्य तत्र देवतावाहनं कुर्यात् । तद्यथा - ब्रह्म जज्ञानं गौतमो वामदेवो ब्रह्मा त्रिष्टुब् ब्रह्मावाहने विनियोगः । ॐ ब्रह्म जज्ञानं० । मध्ये ब्रह्माणं प्रतिष्ठाप्य । आप्यायस्व गोतमः सोमो गायत्री सोमावाहने विनियोगः । ॐ आप्यायस्व० । उत्तरे सोमं प्रतिष्ठाप्य । अभि त्वाऽऽजीगर्तिः शुनःशेप ईशानो गायत्री ईशानावाहने विनियोगः । ॐ अभि त्वा० । ऐशान्यामीशानं प्र० । इन्द्रं वो मधुच्छन्दा इन्द्रो गायत्री इन्द्रावाहने विनियोगः । ॐ इन्द्रं वो० । पूर्वे इन्द्रं प्र० । अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्र्यग्न्यावाहने विनियोगः । ॐ अग्निं दूतं० । आग्नेय्यामग्निं प्र० । यमाय सोमं यमो यमोऽनुष्टुब्यमावाहने विनियोगः । ॐ यमाय सोमं० । दक्षिणे यमं प्रतिष्ठाप्य । मो षु णो घौरः कण्वो निर्ऋतिर्गायत्री निर्ऋत्यावाहने विनियोगः । मो षु णः० । नैर्ऋत्यां निर्ऋतिं प्र० । तत्त्वा यामि शुनःशेपो वरुणस्त्रिष्टुब्वरुणावाहने विनियोगः । ॐ तत्त्वा यामि० । पश्चिमे वरुणं प्र० । वायो शतं वामदेवो वायुरनुष्टुब्वाय्वावाहने विनियोगः । ॐ वायो शतं० । वायव्यां वायुं प्र० । ज्मया अत्र मैत्रावरुणो वसिष्ठो वसवस्त्रिष्टुब्वस्वावाहने विनियोगः । ॐ ज्मया अत्र० । वायुसोमयोर्मध्येऽष्टौ वसून्प्रति० । आ रुद्रासः श्यावाश्व एकादश

रुद्रा जगती रुद्रावाहने विनियोगः । ॐ आ रुद्रास० । सोमेशानयोर्मध्य एकादश रुद्रान्प्र० । त्यां नु सांमदो मत्स्यो द्वादशाऽऽदित्या जगत्यादित्यावाहने विनियोगः । ॐ त्यां नु क्षत्त्रियां० । ईशानेन्द्रमध्ये द्वादशाऽऽदित्यान्प्रति० । अश्विनावर्तीं राहूगणो गोतमोऽश्विनावुष्णिगश्व्यावाहने विनियोगः । ॐ अश्विनावर्ति० । इन्द्राग्निमध्येऽश्विनौ प्रतिष्ठाप्य । ओमासो मधुच्छन्दा विश्वे देवा गायत्री ( विश्वे ) देवावाहने विनियोगः । ॐ ओमासश्चर्षणी० । अग्नियममध्ये विश्वान्देवान्सपैतृकान्प्र० । अभि त्यं वामदेवः सप्त यक्षाः प्रकृतिः सप्तयक्षावाहने विनियोगः · ॐ अभि त्यं देवं० । यमनिर्ऋतिमध्ये सप्त यक्षान्प्र० । आयं गौसार्पराज्ञी सर्पा गायत्री सर्पावाहने विनियोगः । ॐ आयं गौः० । निर्ऋतिवरुणमध्ये भूतनागान् प्र० । अप्सरसामेतश्चो गन्धर्वाप्सरसोऽनुष्टुब् गन्धर्वाप्सरसावाहने विनियोगः । ॐ अप्सरसां० । वरुणवायुमध्ये गन्धर्वाप्सरसः प्र० । कुमारं माता कुमारः स्कन्दस्त्रिष्टुप् स्कन्दावाहने विनियोगः । ॐ कुमारं माता० । ब्रह्मसोममध्ये स्कन्दं प्र० । ऋषभमृषभो वैराज ऋषभोऽनुष्टुबृषभावाहने विनियोगः । ॐ ऋषभं मा समानानां० । ब्रह्मसोममध्य ऋषभं प्र० । शं नः करत्यर्वतेत्यस्य घौरः कण्वो रुद्रो गायत्री शूलावाहने विनियोगः । ॐ शं नः करत्यर्वते० । ब्रह्मसोममध्ये शूलं प्र० । इमा रुद्रायेत्यस्य कुत्सो महाकालो जगती महाकालावाहने विनियोगः । ब्रह्मसोममध्य महाकालं प्र० । आदितिर्द्यौर्क्यो वा बृहस्पतिर्दक्षोत्रिष्टुऽब्दक्षादिगणावाहने विनियोगः । ॐ अदितिर्ह्यजनिष्ट० । ब्रह्मेशानमध्ये दक्षादिसप्तगणान् प्र० । तामग्निवर्णां सोभरिर्दुर्गा त्रिष्टुब्दुर्गावाहने विनियोगः । ॐ तामग्निवर्णां० । ब्रह्मेन्द्रमध्ये दुर्गां प्र० । इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री विष्णवावाहने विनियोगः । ॐ इदं विष्णुर्वि० । ब्रह्मेन्द्रमध्ये विष्णुं प्र० । उदीरतां शङ्खः स्वधा त्रिष्टुप् स्वधावहने विनियोमः । ॐ उदीरता० । ब्रह्माग्निमध्ये स्वधां प्र० । परं मृत्यो संकुशिको मृत्युरोगास्त्रिष्टुब्मृत्युरोगावाहने विनियोगः । ॐ परं मृत्यो अनु परे० । ब्रह्मयममध्ये मृत्युरोगान्प्र० । गणानां त्वा गृत्समदो गणपतिर्जगती गणपत्यावाहने विनियोगः। गणानां त्वा० । ब्रह्मनिर्ऋतिमध्ये गणपतिं प्र० । शं नो देवीराम्बरीषः सि–

म्बुद्वीप आपो गायत्र्यबावाहने विनियोगः । ॐ शं नो देवी० । ब्रह्मवरुणमध्येऽपः प्र० । मरुतो यस्य राहूगणो गोतमो मरुतो गायत्री मरुदावाहने विनियोगः । ॐ मरुतो यस्य० । ब्रह्मवायुमध्ये मरुतः प्र । स्योना पृथिवि मेधातिथिर्भूमिर्गायत्री भूम्यावाहने विनियोगः । ॐ स्योना पृथिवि० । ब्रह्मणः पादमूले कर्णिकाधः पृथिवीं प्र० । इमं मे गङ्गे सिन्धुक्षित्प्रैयमेधो गङ्गायमुनासरस्वत्यो जगती गङ्गाद्यावाहने विनियोगः । ॐ इमं मे गङ्गे यमुने । तत्रैव गङ्गादिनदीः प्र० । धाम्नो धाम्नो गौतमो वामदेवः सप्त सागरा आर्षिः सप्तसागरावाहने विनियोगः । ॐ धाम्नो धाम्नो राजन्० । तत्रव सप्त सागरान्प्र० । तदुपरि मेरुमावाह्य बाह्यपरिधौ सोमादिसंनिधौ क्रमेणाऽऽयुधावाहनं कुर्यात् । सोमसमीपे गदामावाहयामि । ईशानसमीपे शूलमा० । इन्द्रान्तिके वज्रमावाहया० । अग्निसमीपे शक्तिमा० । यमसमीपे दण्डमा० । निर्ऋतिसमीपे खड्गमावाहयामि । वरुणान्तिके पाशमा० । वायुसमीपेऽङ्कुशमावाहयामि तद्बाह्य उत्तरतो गोतममा० । ऐशान्यां भरद्वाजमा० । पूर्वे विश्वामित्रमा० । आग्नेय्यां कश्यपमा० । दक्षिणे जमदग्निमा० । नैर्ऋत्यां वसिष्ठमा० । पश्चिमेऽत्रिमा० । वायव्यामरुन्धतीमा० । तद्बहिः पूर्वं इन्द्राणीमावाहयामि । आग्नेय्यां कौमारीमा० । दक्षिणे ब्राह्मीमा० । नैर्ऋत्यां वाराहीमा० । पश्चिमे चामुण्डामा० । वायव्यां वैष्णवीमा० । उत्तरे माहेश्वरीमा० । ऐशान्यां वैनायकीमा० इत्यष्टौ शक्तयः । इति षट्पञ्चाशद्देवताः सर्वतोभद्रे पूज्याः । एताः स्वस्वमन्त्रैश्च स्थापयित्वा तत्तन्मन्त्रैः क्रमेण पूजयित्वा तत्तन्मन्त्रैर्नाममन्त्रैर्वा प्रत्येकं दश दश तिलाज्याहुतीर्होमावसरे हुत्वोपहारं निवेदयेत् । क्षीरौदनं ब्रह्मणे कृसराच्चतुष्कामिमान्वितमिन्द्राय । आज्यौदनमग्नये । माषान्नं यमाय । कृसरान्नं निर्ऋतये । नवनीतौदनं वरुणाय । यवौदनं वायवे । प्रियङ्ग्वोदनं कृष्णतिलं वा सोमाय । गोवधुकमीशानाय । अन्येभ्यो यथालाभं सर्वेभ्यो वा यथासंभवं नैवेद्यशेषान्नैर्बलिः कार्यः । इति सर्वतोभद्रम् । अथ वास्तुदेवताः । ॐ ब्रह्मणे नमो ब्रह्माणमावाहयामि । एवमेव सर्वत्र । सोमाय० । ईशानाय० । इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । अष्टवसुभ्यो० ।

रुद्रा जगती रुद्रावाहने विनियोगः । ॐ आ रुद्रास० । सोमेशानयोर्मध्य एकादश रुद्रान्प्र० । त्यां नु सांमदो मत्स्यो द्वादशाऽऽदित्या जगत्यादित्यावाहने विनियोगः । ॐ त्यां नु क्षत्रियां० । ईशानेन्द्रमध्ये द्वादशाऽऽदित्यान्प्रति० । अश्विनावर्तीं राहूगणो गोतमोऽश्विनावुष्णिगश्व्यावाहने विनियोगः । ॐ अश्विनावर्ति० । इन्द्राग्निमध्येऽश्विनौ प्रतिष्टाप्य । ओमासो मधुच्छन्दा विश्वे देवा गायत्री ( विश्वे ) देवावाहने विनियोग: । ॐ ओमासश्चर्षणी० । अग्नियममध्ये विश्वान्देवान्सपैतृकान्प्र० । अभि त्यं वामदेवः सप्त यक्षाः प्रकृतिः सप्तयक्षावाहने विनियोगः । ॐ अभि त्यं देवं० । यमनिर्ऋतिमध्ये सप्त यक्षान्प्र० । आयं गौसार्पराज्ञी सर्पा गायत्री सर्पावाहने विनियोगः । ॐ आयं गौः० । निर्ऋतिवरुणमध्ये भूतनागान् प्र० । अप्सरसामेतशो गन्धर्वाप्सरसोऽनुष्टब् गन्धर्वाप्सरसावाहने विनियोगः । ॐ अप्सरसां० । वरुणवायुमध्ये गन्धर्वाप्सरसः प्र० । कुमारं माता कुमारः स्कन्दस्त्रिष्टुप् स्कन्दावाहने विनियोगः । ॐ कुमारं माता० । ब्रह्मसोममध्ये स्कन्दं प्र० । ऋषभमृषभो वैराज ऋषभोऽनुष्टुबृषभावाहने विनियोगः । ॐ ऋषभं मा समानानां० । ब्रह्मसोममध्य ऋषभं प्र० । शं नः करत्यर्वतेत्यस्य घौरः कण्वो रुद्रो गायत्री शूलावाहने विनियोगः । ॐ शं नः करत्यवर्तते० । ब्रह्मसोममध्ये शूलं प्र० । इमा रुद्रायेत्यस्य कुत्सो महाकालो जगती महाकालावाहने विनियोगः । ब्रह्मसोममध्य महाकालं प्र० । आदितिर्लौक्यो वा बृहस्पतिर्दक्षोत्रिष्टुऽब्दक्षादिगणावाहने विनियोगः । ॐ अदितिर्ह्यजनिष्ट० । ब्रह्मेशानमध्ये दक्षादिसप्तगणान् प्र० । तामग्निवर्णां सोभरिर्दुर्गा त्रिष्टुब्दुर्गावाहने विनियोगः । ॐ तामग्निवर्णां० । ब्रह्मेन्द्रमध्ये दुर्गां प्र० । इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री विष्णवावाहने विनियोगः । ॐ इदं विष्णुर्वि० । ब्रह्मेन्द्रमध्ये विष्णुं प्र० । उदीरतां शङ्खः स्वधा त्रिष्टुप् स्वधावहने विनियोमः । ॐ उदीरता० । ब्रह्माग्निमध्ये स्वधां प्र० । परं मृत्यो संकुशिको मृत्युरोगास्त्रिष्टुब्मृत्युरोगावाहने विनियोगः । ॐ परं मृत्यो अनु परे० । ब्रह्मयममध्ये मृत्युरोगान्प्र० । गणानां त्वा गृत्समदो गणपतिर्जगती गणपत्यावाहने विनियोगः। गणानां त्वा० । ब्रह्मनिर्ऋतिमध्ये गणपतिं प्र० । शं नो देवीराम्बरीषः सि-

म्बुद्वीप आपो गायत्र्यबावाहने विनियोगः । ॐ शं नो देवी० । ब्रह्मवरुणमध्येऽपः प्र० । मरुतो यस्य राहूगणो गोतमो मरुतो गायत्री मरुदावाहने विनियोगः । ॐ मरुतो यस्य० । ब्रह्मवायुमध्ये मरुतः प्र । स्योना पृथिवि मेधातिथिर्भूमिर्गायत्री भूम्यावाहने विनियोगः । ॐ स्योना पृथिवि० । ब्रह्मणः पादमूले कर्णिकाधः पृथिवीं प्र० । इमं मे गङ्गे सिन्धुक्षित्प्रैयमेधो गङ्गायमुनासरस्वत्यो जगती गङ्गाद्यावाहने विनियोगः । ॐ इमं मे गङ्गे यमुने । तत्रैव गङ्गादिनदीः प्र० । धाम्नो धाम्नो गौतमो वामदेवः सप्त सागरा आर्षिः सप्तसागरावाहने विनियोगः । ॐ धाम्नो धाम्नो राजन्० । तत्रव सप्त सागरान्प्र० । तदुपरि मेरुमावाह्य बाह्यपरिधौ सोमादिसंनिधौ क्रमेणाऽऽयुधावाहनं कुर्यात् । सोमसमीपे गदामावाहयामि । ईशानसमीपे शूलमा० । इन्द्रान्तिके वज्रमावाहया० । अग्निसमीपे शक्तिमा० । यमसमीपे दण्डमा० । निर्ऋतिसमीपे खड्गमावाहयामि । वरुणान्तिके पाशमा० । वायुसमीपेऽङ्कुशमावाहयामि तद्बाह्य उत्तरतो गोतममा० । ऐशान्यां भरद्वाजमा० । पूर्वे विश्वामित्रमा० । आग्नेय्यां कश्यपमा० । दक्षिणे जमदग्निमा० । नैर्ऋत्यां वसिष्ठमा० । पश्चिमेऽत्रिमा० । वायव्यामरुन्धतीमा० । तद्बहिः पूर्वे इन्द्राणीमावाहयामि । आग्नेय्यां कौमारीमा० । दक्षिणे ब्राह्मीमा० । नैर्ऋत्यां वाराहीमा० । पश्चिमे चामुण्डामा० । वायव्यां वैष्णवीमा० । उत्तरे माहेश्वरीमा० । ऐशान्यां वैनायकीमा० इत्यष्टौ शक्तयः । इति षट्पञ्चाशद्देवताः सर्वतोभद्रे पूज्याः । एताः स्वस्वमन्त्रैश्च स्थापयित्वा तत्तन्मन्त्रैरेव क्रमेण पूजयित्वा तत्तन्मन्त्रैर्नाममन्त्रैर्वा प्रत्येकं दश दश तिलाज्याहुतीर्होमावसरे हुत्वोपहारं निवेदयेत् । क्षीरौदनं ब्रह्मणे घृतान्नमुदकाभिमान्त्रितमिन्द्राय । आज्यौदनमग्नये । माषान्नं यमाय । घृतान्नं निर्ऋतये । नवनीतौदनं वरुणाय । यवौदनं वायवे । प्रियङ्ग्वौदनं कृष्णव्रीह्यन्नं वा सोमाय । गावेधुकमीशानाय । अन्येभ्यो यथालाभं सर्वेभ्यो वा यथासंभवं नैवेद्यशेषान्नैर्बलिः कार्यः । इति सर्वतोभद्रम् । अथ नामदेवताः । ॐ ब्रह्मणे नमो ब्रह्माणमावाहयामि । एवमेव सर्वत्र । सोमाय० । ईशानाय० । इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । अष्टवसुभ्यो० ।

एकादशरुद्रेभ्यो० । द्वादशादित्येभ्यो० । अश्विभ्यां० । विश्वेभ्यो देवेभ्यो० । पितृभ्यो० । सप्तयक्षेभ्यो । भूतनागेभ्यो० । गन्धर्वाप्सरोभ्यः० । स्कन्दाय० । नन्दिने० । शूलाय० । महाकालाय० । दक्षादिसप्तगणेभ्यो० । दुर्गायै० । विष्णवे० । स्वधायै० । मृत्युरोगेभ्यो० । गणपतये० । अद्भ्यो० । मरुद्भ्यो० । भूम्यै० । ( गङ्गादिनदीभ्यो० । सप्तसागरेभ्यो० । मेरवे० । गदायै० )। त्रिशूलाय० । वज्राय० । शक्तये० । दण्डाय० । खड्गाय० । पाशाय० । अङ्कुशाय० । गोतमाय । भरद्वाजाय० । विश्वामित्राय० । कश्यपाय० । जमदग्नये० । वसिष्ठाय० । अत्रये० । अरुन्धत्यै० । ऐन्द्र्यै० । कौमार्यै० । ब्राह्म्यै० । वाराह्यै० । चामुण्डायै० । वैष्णव्यै० । माहेश्वर्यै० । वैनायक्यै० । ५७ इति सर्वतोभद्रनामदेवताः । अथवा मत्कृतरुद्रानुष्ठानकौमुदीस्थब्रह्मादिदेवतास्थापनं कार्यम् । ततः पूर्वोक्तैवंगुणविशेषणविशिष्टायां पुण्यतिथावस्मिन्गायत्रीपुरश्चरणकर्मण्यादित्यादिनवग्रहदेवतास्थापनं करिष्ये । प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता दैवी गायत्री छन्दो व्याहृतीनां क्रमेण जमदग्निभरद्वाजभृगव ऋषयोऽग्निवायुसूर्या देवता दैवीगायत्रीदैव्युष्णिग्दैवीबृहत्यश्छन्दांसि सूर्याद्यावाहने विनियोगः । ग्रहपीठस्थमध्ये वर्तुले द्वादशाङ्गुले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैः—आकृष्णेन हिरण्यस्तूपः सविता त्रिष्टुप् सूर्यावाहने विनियोगः । ॐ आ कृष्णेन र० । ॐ भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपसगोत्र भोः सूर्येहाऽऽगच्छेह तिष्ठेत्यावाह्य स्थापयेत् । तत आग्नेय्यां चतुरस्रे चतुरङ्गुले मण्डले प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतैः—आप्यायस्व गोतमः सोमो गायत्री सोमावाहने विनियोगः । ॐ आप्यायस्व० । ॐ भूर्भुवः स्वर्यमुनातीरोद्भवाऽऽत्रेयसगोत्र सोमेहाऽऽगच्छेह तिष्ठेति स्थापयेत् । ततो दक्षिण त्रिकोणे मण्डले दक्षिणाभिमुखं भौमं रक्तपुष्पाक्षतैः—अग्निर्मूर्धा विरूपोऽङ्गारको गायत्र्यङ्गारकावाहने विनियोगः । ॐ अग्निर्मूर्धा० । ॐ भूर्भुवः स्वरवन्तिसमुद्भव भारद्वाजसगोत्र भौमेहाऽऽगच्छेह तिष्ठेति स्थापयेत् । तत ऐशान्यां बाणाकारे चतुरङ्गुले मण्डल उदङ्मुखं बुधं पीतपुष्पाक्षतैः—उद्बुध्यध्वं बुधः सौम्यो बुधस्त्रिष्टुब्बुधावाहने विनियोगः । ॐ उद्बुध्यध्वं० । ॐ भूर्भुवः स्वर्मगधदेशोद्भवाऽऽत्रेयसगोत्र बुधेहाऽऽगच्छेह तिष्ठेति

स्थापयेत्। उत्तरतो दीर्घचतुरस्रे षडङ्गुले मण्डल उदङ्मुखं बृहस्पतिं पीतपुष्पाक्षतैः—बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुब्बृहस्पत्यावाहने विनियोगः। ॐ बृहस्पते०। ॐ भूर्भुवः स्वः सिन्धुदेशोद्भवाऽऽङ्गिरसगोत्र बृहस्पत इहाऽऽगच्छेह तिष्ठेति स्थापयेत्। ततः पूर्वे पञ्चकोष्ठे नवाङ्गुले मण्डले प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतैः—शुक्रः पाराशरः शुक्रो द्विपदा विराट् शुक्रावाहने विनियोगः। ॐ शुक्रः शुशु०। ॐ भूर्भुवः स्वर्भोजकटदेशोद्भव भार्गवसगोत्र शुक्रेहाऽऽगच्छेह तिष्ठेति स्थापयेत्। ततः पश्चिमे धनुषि व्यङ्गुले मण्डले प्रत्यङ्मुखं शनिं कृष्णपुष्पाक्षतैः—शमग्निरिरिम्बिाठिः शनैश्चर उष्णिक् शन्यावाहने विनियोगः। ॐ शमाग्निरग्निभिः कर०। ॐ भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र शनैश्चरेहाऽऽगच्छेह तिष्ठेति स्थापयेत् ततो नैर्ऋत्य शूर्पाकारे द्वादशाङ्गुले मण्डले दक्षिणामुखं राहुं कृष्णपुष्पाक्षतैः—कया नो वामदेवो राहुर्गायत्री राह्वावाहने विनियोगः। ॐ कया नश्चि०। ॐ भूर्भुवः स्वः राठीपुरोद्भव पैटीनसगोत्र राहो इहाऽऽगच्छेह तिष्ठेति स्थापयेत्। ततो वायव्ये ध्वजाकारे षडङ्गुले मण्डले दक्षिणामुखं केतुं धूम्रपुष्पाक्षतैः—केतुं कृण्वन्मधुच्छन्दाः केतवो गायत्री केत्वावाहने विनियोगः। ॐ केतुं कृण्वन्न०। ॐ भूर्भुवः स्वरन्तर्वेदिसमुद्भवा जैमिनिसगोत्राः केतव इहाऽऽगच्छतेह तिष्ठतेति स्थापयेत्। अथाधिदेवताः प्रत्यधिदेवताश्च मात्स्योक्तप्रकारेण लिख्यन्ते। पाद्मे तु—मात्स्योक्ता या अधिदेवतास्ताः प्रत्यधिदेवताः याः प्रत्यधिदेवतास्ता आधिदेवता इयान्विशेषः। आग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्र्यग्न्यावाहने विनियोगः। ॐ आग्निं दूतं०। अग्न इहाऽऽगच्छेत्यावाह्य सूर्यदक्षिणपार्श्वेऽग्निम्। अप्सु मे मेधातिथिरापोऽनुष्टुबबावाहने विनियोगः। ॐ अप्सु मे सोमो०। आप इहाऽऽगच्छेतेत्यावाह्य सोमदक्षिणपार्श्वेऽपः। स्योना पृथिवि मेधातिथिर्भूमिर्गायत्री भूम्यावाहने विनियोगः। ॐ स्योना पृथिवि०। भूम इहाऽऽगच्छेह तिष्ठेत्यावाह्य भौमदक्षिणपार्श्वे भूमिम्। इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री विष्णवावाहने विनि-

योगः । ॐ इदं विष्णु० । विष्णो इहाऽऽगच्छेति बुधदक्षिणपार्श्वे विष्णुम् । इन्द्र श्रेष्ठा गृत्समद इन्द्रस्त्रिष्टुबिन्द्रावाहने विनियोगः । ॐ इन्द्र श्रेष्ठानि० । इन्द्रेहाऽऽगच्छेति गुरुदक्षिणपार्श्वे इन्द्रम् । इन्द्राणीमासु वृषाकपिरिन्द्राणी पङ्क्तिरिन्द्राण्यावाहने विनियोगः । ॐ इन्द्राणीमासु० । इन्द्राणीहाऽऽगच्छेह तिष्ठेति शुक्रदक्षिणपार्श्वे इन्द्राणीम् । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् प्रजापत्यावाहने विनियोगः । ॐ प्रजापते० प्रजापत इहाऽऽगच्छेह तिष्ठेति शनिदक्षिण पार्श्वे प्रजापतिम् । आयं गौः सार्पराज्ञी सर्पा गायत्री सर्पावाहने विनियोगः । ॐ आयं गौः पृ० । सर्पा इहाऽऽगच्छतेह तिष्ठतेति राहुदक्षिणपार्श्वे सर्पान् । ब्रह्म जज्ञानं गौतमो वामदेवो ब्रह्मा त्रिष्टुब्ब्रह्मावाहने विनियोगः । ॐ ब्रह्म जज्ञानं० । ब्रह्मन्निहाऽऽगच्छेह तिष्ठेति केतुदक्षिणपार्श्वे ब्रह्माणम् । [ आवाहयेदिति सर्वत्र ] । अथ प्रत्यधिदेवताः । त्र्यम्बकं वसिष्ठो रुद्रोऽनुष्टुबीश्वरावाहने विनियोगः । ॐ त्र्यम्बकं यजामहे० । ईश्वरेहाऽऽगच्छेह तिष्ठेति सूर्यवामपार्श्वे ईश्वरमावाहयामि । गौरीर्मिमा दीर्घतमा उमा जगत्युमावाहने विनियोग । ॐ गौरीर्मिमा० । गौरीहाऽऽगच्छेह तिष्ठेति सोमवामपार्श्वे उमामावाहयामि । यदक्रन्दो दीर्घतमा स्कन्दस्त्रिष्टुप् स्कन्दावाहने विनियोगः ॐ यदक्रन्दः० । स्कन्देहाऽऽगच्छेह तिष्ठेति भौमवामपार्श्वे स्कन्दमावाहयामि । विष्णोर्नुकं दीर्घतमा नारायणस्त्रिष्टुब्नारायणावाहने विनियोगः । ॐ विष्णोर्नुकं० । नारायणेहाऽऽगच्छेह तिष्ठेति बुधवामपार्श्वे नारायणमावाहयामि । ब्रह्मणस्पते गृत्समदो ब्रह्मणस्पतिस्त्रिष्टुब्ब्रह्मावाहने विनियोगः । ॐ ब्रह्मणस्पते० । ब्रह्मन्निहाऽऽगच्छेह तिष्ठेति गुरुवामपार्श्वे ब्रह्माणमावाहयामि । इन्द्रं वो मधुच्छन्दा इन्द्रो गायत्रीन्द्रावाहने विनियोगः । ॐ इन्द्रं वो० । इन्द्रेहाऽऽगच्छेह तिष्ठेति शुक्रवामपार्श्वे इन्द्रमावाहयामि । यमाय सोमं यमो यमोऽनुष्टुब्यमावाहने विनियोगः । ॐ यमाय सोमं० । यमेहाऽऽगच्छेह तिष्ठेति शनिवामपार्श्वे यममावाहयामि । मोषु णो घोरः कण्वः कालो गायत्री कालावाहने विनियोगः । ॐ

मोषु णः० । कालेहाऽऽगच्छेह तिष्ठेति राहुवामपार्श्वे कालमावाहयामि । उषो वाजं प्रस्कण्वाश्चित्रगुप्तो बृहती चित्रगुप्तावाहने विनियोगः । ॐ उषो वाजं० । चित्रगुप्तेहाऽऽगच्छेह तिष्ठेति केतुवामपार्श्वे चित्रगुप्तमावाहयामि । तत शुक्लपुष्प तण्डुलैर्गणानां त्वा मृत्सभदो गणपतिर्जगती विनायकावाहने विनियोगः । ॐ गणानां त्वा० । विनायकेहाऽऽगच्छेह तिष्ठेति राहोरुत्तरतो विनायकमावाहयामि । जातवेदसे कश्यपो दुर्गा त्रिष्टुब्दुर्गावाहने विनियोगः । ॐ जातवेदसे० । दुर्गे इहाऽऽगच्छेह तिष्ठेति शनेरुत्तरतो दुर्गामावाहयामि । तव वायो व्यश्वाङ्गिरसो वायुर्गायत्री वाय्वावाहने विनियोगः । ॐ तव वायवृ० । वाया इहाऽऽच्छेह तिष्ठेति रवेरुत्तरतो वायुमावाहयामि । आदित्प्रत्नस्य वत्स आकाशो गायत्र्याकाशावाहने विनियोगः । ॐ आदित्प्रत्नस्य रेतसो० । आकाशेहाऽऽगच्छेह तिष्ठेति राहोर्दक्षिणत आकाशमावाहयामि । एषो उषा प्रस्कण्वोऽश्विनौ गायत्र्यश्व्यावाहने विनियोगः । ॐ एषो उषा० । अश्विनाविहाऽऽगच्छतमिह तिष्ठतं केतोर्दक्षिणतोऽश्विनावावाहयामि । ततः सर्वेषामुत्तरतः क्षेत्रस्य वामदेवः क्षेत्रपालोऽनुष्टप् क्षेत्रपालावाहने विनियोगः । ॐ क्षेत्रस्य पतिना० । क्षेत्रपालेहाऽऽगच्छेह तिष्ठोत्तरे क्षेत्रपालमावाहयामि । वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुब्वास्तोष्पत्यावाहने विनियोगः । ॐ वास्तोष्पते० । वास्ता ( स्तोष्पत इ ) विहाऽऽगच्छेह तिष्ठेत्युत्तरे वास्तोष्पतिमावाहवामि । ततो लोकपालान् । इन्द्रं विश्वा जेता मधुच्छन्दस इन्द्रोऽनुष्टुबिन्द्रावाहने विनियोगः । इन्द्रं विश्वा अवीवृधन्० । इन्द्रेहाऽऽगच्छेह तिष्टति पूर्वस्यामिन्द्रमावाहयामि । अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्र्यग्न्यावाहने विनियोगः । ॐ अग्निं दूतं० । अग्न इहाऽऽगच्छेह तिष्ठाऽऽग्नेय्यामग्निमावाहयामि । यमाय सोमं यमो यमोऽनुष्टुब्यमावाहने विनियोगः । ॐ यमाय सोमं० । यमेहाऽऽगच्छेह तिष्ठ दक्षिणस्यां यममावाहयामि । मोषु णो घोरः कण्वो निर्ऋतिर्गायत्री निर्ऋत्यावाहने विनियोगः । ॐ मोषुः णः परापरा० । निर्ऋत इहाऽऽगच्छेह तिष्ठ नैर्ऋत्यां निर्ऋतिमावाहयामि ।

त्वं नो अग्नी वामदेवो वरुणस्त्रिष्टब्वरुणावाहने विनियोगः । ॐ त्वं नो अग्ने० वरुणेहाऽऽगच्छेह तिष्ठ पश्चिमस्यां वरुणमावाहयामि । तव वायो व्यश्वाङ्गिरसो वायुर्गायत्री वाय्वावाहने विनियोगः । ॐ तव वायव० । वाया इहाऽऽगच्छेह तिष्ठ वायव्यां वायुमावाहयामि । सोमो धेनुं गोतमः सोमस्त्रिष्टुप्सोमावाहने विनियोगः । ॐ सोमो धेनुं० । सोमेहाऽऽगच्छेह तिष्ठोत्तरस्या सोममावाहयामि । तमीशानं गोतम ईशानो जगतीशानावाहने विनियोगः । ॐ तमीशानं० । ईशानेहाऽऽगच्छेह तिष्ठेशान्यामीशानमावाहयामि । ततो रवेः पूर्वे शेषमावाहयामि सोमस्याग्रे वासुकिमावाहयामि । भौमस्याग्रे तक्षकमावाहयामि । बुधोत्तरे कर्कोटकमावाहयामि गुर्वग्रे पद्ममावाहयामि । शुक्रोत्तरे महापद्ममावाहयामि शनिपश्चिमे शङ्खपालमावाहयामि । राहोः पुरतः कम्बलमावाहयामि । केतोः पुरत. कुलिकमामाहयामि । ततो भूगृहे पूर्वेऽश्विन्यादिसप्तनक्षत्राण्यावाहयामि । विष्कम्भादिसप्त योगानावाहयामि । बवबालवकरणे आवाहयामि । सप्त द्वीपान्यावाहयामि । ऋग्वेदमावाहयामि । ततौ दक्षिणे पुष्यादिसप्त नक्षत्राण्यावाहयामि । धृत्यादिसप्त योगानावाहयामि । कौलवतैतिलकरणे आवाहयामि । सप्त पातालान्यावाहयामि । यजुर्वेदमावाहयामि । ततः पश्चिमे स्यात्यादिसप्त नक्षत्राण्यावाहयामि । वज्रादिसप्त योगानावाहयामि । गरवणिजकरणे आवाहयामि । सप्त सागरानावाहयामि । सामवेदमावाहयामि । उत्तरेऽभिजिदादिसप्त नक्षत्राण्यावाहयामि । साध्यादिषड्योगानावाहयामि । विष्टिकरणमावाहयामि । भूरादिसप्त लोकानावाहयामि । अथर्ववेदमावाहयामि । वायव्ये ध्रुवमावाहयामि । सप्त ऋषीनावाहयामि । ततो यथावकाशं गङ्गादिसप्त सरित आवाहयामि । सप्तकुलाचलानावाहयामि । अष्टौ वसूनावाहयामि । द्वादशाऽऽदित्यानावाहयामि । एकादश रुद्रानावाहयामि । एकोनपञ्चाशन्मरुत आवाहयामि । षोडश मातॄरावाहयामि । षड्ऋतूनावाहयामि । द्वादश मासानावाहयामि । द्वे अयने आवाहयामि । पञ्चदश तिथीरावाहयामि । षष्टिं

संवत्सरानावाहयामि । सुपर्णानावाहयामि । नागानावाहयामि । सर्पानावाहयामि । यक्षानावाहयामि । गन्धर्वानावाहयामि । विद्याधरानावाहयामि । अप्सरस आवाहयामि । रक्षांस्यावाहयामि । भूतान्यावाहयामि । मनुष्यानावाहयामि । इत्येते स्थाप्याः । तदस्तु मित्रावरुणा० । गृहा वै प्रतिष्ठासूक्तं तत्प्रति० । प्रतिष्ठां विधाय पूजामारभेत् । तत्र ग्रहस्थानानि ( स्वरूपाणि ) ।

पद्मासनः पद्मकरः पद्मगर्भः प्रजापतिः ।
सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा रविः ॥ १ ॥

श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः ।
गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥ २ ॥

रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः ।
चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ ३ ॥

पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः ।
खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥ ४ ॥

देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ ।
दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥ ५ ॥

इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः ।
बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥ ६ ॥

करालवदनः खड्गचर्मशूली वरप्रदः ।
नीलसिंहासनस्थश्च राहुरत्र प्रशस्यते ॥ ७ ॥

धूम्राद्विबाहवः सर्वे गदिनो विकृताननाः ।
गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥ ८ ॥

सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः ।
अङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा ॥ ९ ॥

इति ध्यात्वा-ततः पुरुषसूक्तेन षोडशोपचारैः पूजयेत् । ततः सूर्यादिभ्यो गुडौदनं घृतपायसं मसूरान्नं क्षीरौदनं दध्योदनं घृतौदनं कृसरान्नमजमांसं चित्रौदनं च क्रमेण बलिं दद्यात् । अन्येभ्यः पायसम् । उक्तालाभे सर्वेभ्यः पायसम् । ततो ग्रहवेदशानभागेऽव्रणमकालिकं बहिर्दध्यक्षताविभूषितं कलशं पूर्ववन्मन्त्रैर्निदध्यात् । तदुपरि तत्त्वा यामीति वरुणमावाह्य पूजयेत् । तत्र कलशस्य। मुखे विष्णुरित्यादि । ततः प्रार्थना-

देवदानवसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्राः विश्वे देवाः सपैतृकाः ।
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥
सांनिध्यं कुरु देवेश प्रसन्नो भव सर्वदा ।

तत्रैकं ब्राह्मणं शान्तिसूक्तजपार्थे वृणुयात् । तत आचार्योऽग्नेः पाश्चमति उपविश्य देशकालौ स्मृत्वा तत्र गायत्रीपुरश्चरणाङ्गहोमदेवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वाऽत्र प्रधानमादित्यं सोमं भौमं बुधं बृहस्पतिं शुक्रं शनैश्चरं राहुं केतुमेताः प्रधानदेवता अमुकसंख्ययाऽर्कादिसमिच्चरुघृततिलव्रीह्याहुतिभिराग्निमपो भूमिं विष्णुमिन्द्रमिन्द्राणीं प्रजापतिं सर्पान्ब्रह्माणमेता अधिदेवताः पूर्वोक्तद्रव्यैरमुकसंख्ययेश्वरमुमां स्कन्दं नारायणं ब्रह्माणमिन्द्रं यमं कालं चित्रगुप्तमेताः प्रत्यधिदेवताः पूर्वोक्तद्रव्यैरमुकसंख्यया प्रधानदेवतां सवितारं घृतक्षीरौदनतिलदुर्वाश्वत्थोदुम्बरजाटवटद्रव्यैः प्रतिद्रव्यं

त्रित्रिसहस्रसंख्याकाहुतिभिस्तथा पाठस्था देवता आवरणदेवताश्च दश दशाऽऽज्याहुतिभिस्तिलाहुतिभिर्वा क्रतुसाद्गुण्यदेवता इन्द्राद्यष्ट लोकपालांश्चान्या ग्रहपीठस्था देवता अमुकसंख्ययोक्तद्रव्यैर्ब्रह्मादिदेवताश्च मण्डप ( ल ) देवताश्च दश दश घृताक्ततिलाहुतीभिरेकैकयाऽऽज्याहुत्या वा यक्ष्ये । शेषेण स्विष्टकृतमित्यादि । आज्यसंस्कारकाले चरुपायसव्रीहितिलैः सहाऽऽज्यस्य पर्यग्निकरणादि कृत्वा ततो चक्षुष्यन्ते यजमानेन द्रव्यत्यागः कार्यः । स चेदं हवनीयद्रव्यं हुतं होष्यमाणं चान्वाधानोक्तदेवताभ्योऽस्तु न ममेति । तत्र ग्रहसमिधः—

अर्कः पलाशः खदिर अ( रो ह्य ) पामार्गोऽथ पिप्पलः ।
औदुम्बरशमीदूर्वाकुशाश्च समिधः क्रमात् ॥

अत्र ग्रहहोमप्रकरणे प्रधानहोमदशांशेन पार्श्वदेवातानां तदर्धेनेतरासामिति विशेषः । समिच्चर्वाज्यद्रव्यत्रयं वा ग्रहाणाम् । तत पूर्वोक्तगायत्रीन्यासान्कृत्वा पूर्वाह्ण एव प्राङ्मुखा उदङ्मुखा वा गायत्र्यर्थं स्मरन्तो द्विजा निश्चिन्ततया होमं कुर्युः । होमे तु सप्रणवव्याहृतिका स्वाहान्ता गायत्री । दुर्वात्रयस्यैकाऽऽहुतिः । दूर्वासमिधां मध्वाज्याभ्यञ्जनं कार्यम् । एवमन्वाधानोक्तक्रमेण होमं समाप्याग्निं संपूज्याऽऽचार्यो नाममन्त्रैः पूर्वोक्तपीठादिदेवताहोमं कुर्यात् । ततः स्विष्टकृतं नवाऽऽहुतीश्च हुत्वा पूर्वोक्तस्थापनमन्त्रैर्लोकपालग्रहादिभ्यो बलिं दद्यात् । ततो गायत्रीपीठसमीपे दध्यक्तं पयसाऽक्तं च घृताक्तं चाऽऽहारपरिमितं बलिं शिरोव्याहृतिसहितगायत्र्या त्रिवारं प्रोक्षितं दद्यात् । तत्र मन्त्राः—गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री छन्दो गायत्रीप्रीत्यर्थं बलिदाने विनियोगः । सव्याहृतिकां गायत्रीं पठित्वा गायत्र्यै साङ्गायै सपरिवारायै सशक्तिकाया इमं सदीपं दध्यक्तबलिं समर्पयामि । भो गायत्रीमं बलिं गृहाण । मम सकुटुम्बस्याऽऽयुष्कर्त्री क्षेमकर्त्री पुष्टिकर्त्री तुष्टिकर्त्री निर्विघ्नकर्त्री भव । ततस्तोरणाद्बहिर्महाबलिं कुङ्कुमादिरक्तं रक्तपुष्पादियुतं सोदकुम्भं सकूष्माण्डं तदभावे सनारिकेलं सदीपं सदक्षिणं क्षेत्रपालाय दद्यात् । क्षेत्रस्य वामदेवः क्षेत्रपालोऽनुष्टुप् क्षेत्रपालप्रीत्यर्थं बलिदाने [ विनियोगः ] । ॐ क्षेत्रस्य पतिना० । क्षेत्रपालाय

भूतप्रेतपिशाचराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुतायेमं सदीपं बलिं समर्पयामि। भोः क्षेत्रपालेमं बलिं गृहाण । मम सकुटुम्बस्येत्यादि० । बलिं गृह्णन्तु मे देवा इत्यादिश्लोकान्पठेत् । इमं बलिं शूद्रेण दुर्ब्राह्मणेन वा चतुष्पथे क्षेपयेत् । ततः प्रक्षालितपाणिपाद आचम्य देशकालौ स्मृत्वा कृतस्य गायत्रीपुरश्चरणाङ्गहोमस्य पूर्णतासिद्ध्यर्थं पूर्णाहुतिं होष्य इति संकल्प्य स्रुचि द्वादशगृहीतं चतुर्गृहीतं वाऽऽज्यं कृत्वा वस्त्रयुतनारिकेलादिफलं चन्दनमालादियुतं तदुपरि निधाय पूर्णाहुतिं यजमानान्वारब्ध आचार्यो जुहुयात् । तत्र मन्त्राः–समुद्रादूर्मिरिति तृचस्य गौतमो वामदेवोऽग्निस्त्रिष्टुप्पूर्णाहुतिहोमे विनियोगः । ॐ समुद्रादूर्मि० । मूर्धानं दिवो बार्हस्पत्यो भरद्वाजो वैश्वानरस्त्रिष्टुप्पूर्णाहु० मूर्धानं दि० । पुनस्त्वाग्निर्वसुरुद्रा आदित्याः शतक्रतुस्त्रिष्टुप्पूर्णाहु० । पुनस्त्वाऽऽदित्या० । पूर्णादर्वि विश्वे देवाः शतक्रतुरनुष्टुप्पूर्णाहु० । ॐ पूर्णाहु० । ॐ पूर्णा दर्वि परा० । सप्त ते अग्ने सप्तवानग्निर्जगती पूर्णाहुति० ॐ सप्त ते अग्ने स० । धाम ते वामदेव आपो जगती पूर्णाहुति० । ॐ धामं ते विश्वं० । स्वाहाकारेणाग्नौ क्षिपेत् । पूर्णाहुतिमुत्तमां जुहोति० । अथ यजमानस्त्विदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेऽग्नयेऽद्भ्यश्च न ममेति त्यागं कुर्यात् । ततो वसोर्धारा । तत्रायं क्रमः–वह्नेरुपरि स्तम्भद्वयविधृतामौदुम्बरीमृज्वीमकोटरां बाहुप्रमाणामार्द्रां स्रुचं पूर्वाग्रां निधाय तदुपरि शृङ्खलाविधृतेन निर्मलघृतपूरितेन ताम्रमृदादिकुम्भेन यवमात्रच्छिद्रेणाऽऽज्यं मुञ्चताऽग्नेरुपरि वसोर्धारां पातयेत् । तस्यां च घृतधारायां स्रुङ्नालिकयाऽग्नौ पतन्त्यां चमकानाग्नयादिसूक्तानि च श्रावयेत् । अथ चमकानुवाकानामाग्निः काण्डऋषिराद्याऽऽग्नावैष्णवो गायत्री शिष्टं यजुर्वाजादयो लिङ्गोक्ता अन्नादिविशेषा देवता वसोर्धारायां विनियोगः । ॐ अग्निमीळे पुरोहितम् । विष्णोर्नुकमिति षण्णामौचथ्यो दीर्घतमा विष्णुस्त्रिष्टुब्वसोर्धारायां विनियोगः । विष्णोर्नुकं० । आ ते पितरिति पञ्चदशानां गृत्समदो रुद्रस्त्रिष्टुब्वसोर्धारायां विनियोगः । आ ते पितर्म० । स्वादिष्ठयेति दशानां वैश्वामित्रो मधुच्छन्दाः पवमानसोमो

गायत्री वसोर्धारायां विनियोगः । स्वादिष्ठया० । वसोर्धारां जुहोति । महावैश्वानरं नाम वैश्वानराख्य आरण्यके षष्ठप्रपाठके पठितं सामद्वयं तस्य महावैश्वानरः पच्छो बृहती छन्दो वसोर्धारायां विनियोगः । ज्येष्ठसाम तु मूर्धानं दिव इत्यस्यामृचि गीतम् । ज्येष्ठसाम्नो भरद्वाज ऋषिर्वैश्वानरो देवता त्रिष्टुप्छन्दो वसोर्धारायां विनियागः । सामाभावे ऋङ्मात्रं पठेत् । एवं वसोर्धारां विधाय यथाशास्त्रं पूर्णपात्रविमोकादि कर्मशेषं समापयेत् । ततो यजमानो दक्षिणासंकल्पं कुर्यात् । तच्चैवं—पूर्वसंकल्पमुक्त्वाऽऽत्मप्रतिनिधित्वेन ब्राह्मणद्वारा कृतं यच्चतुर्विंशतिलक्षात्मकममुकलक्षात्मकं वा गायत्रीपुरश्चरणं तत्संपूर्णफलावाप्तये तत्कर्तृकेभ्यो ब्राह्मणेभ्यो दक्षिणाप्रदानं करिष्य इति संकल्प्य तत आचार्यादयो ऋत्विजश्च यजमानहस्ते श्रेयःसंपादनं कुर्युः । तच्चैवं—शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । दीर्घमायुः श्रि( श्रे )यः शान्तिः पुष्टिस्तुष्टिश्चास्त्वित्यादि । भवन्नियोगेन मयाऽस्मिन्गायत्रीपुरश्चरणे कृतं यदाचार्यकर्म तदुत्पन्नं यच्छ्रेयस्तत्तुभ्यमहं संप्रददे । श्रेयसे[ यः ] प्रतिगृह्यताम् । प्रतिगृह्णामीति यजमानो वदेत् । एवं ब्रह्मा सदस्य उपद्रष्टा च । एवमेव प्रतिनिधयो ब्राह्मणा अस्मिन्गायत्रीपुरश्चरणेऽमुकसंख्याकः कृतो यो जपस्तथा च कृतं यद्धवनं तदुत्पन्नं यच्छ्रेयस्तत्तुभ्यमहं संप्रददे । एवं सर्वेऽपि । ततो यजमानश्चन्दनादिनाऽऽचार्यादीन्संपूज्य स्वगोत्रमुच्चार्यामुकशर्मणेऽमुकगोत्राय [ ऋत्विजे ] कृतगायत्रीपुरश्चरणप्रतिष्ठासिद्ध्यर्थमिमां दक्षिणां तुभ्यमहं संप्रददे । ते च सावित्रेण यजुषा प्रतिगृह्य स्वस्वशाखीयां कामस्तुतिं पठेयुः । तत आचार्याय गां ब्रह्मणे वृषभं सदस्याय सदश्वमुपद्रष्ट्रे पूर्णपात्रं च दत्त्वा विशिष्टदक्षिणादिना तान्परितोषयेत् । दक्षिणामानमुक्तं वसिष्ठसंहितायाम्—

> सावित्र्याः प्रतिसाहस्रं गौरेका दक्षिणा मता ।
>
> तदभावे तु तन्मूल्यं वित्तशाठ्यविवर्जितम् ॥ इति ।

तत उक्तप्रकारेण गां संपूज्य दद्यात् । तत्र मन्त्रः—

यज्ञसाधानभूता या विश्वस्याघौघनाशिनी ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥

ततो वृषभस्य—

धर्मस्त्वं वृषरूपेण जगदानन्दकारक ।
अतस्तस्य प्रदानेन शान्तिरस्तु सदा मम ॥

अश्वमन्त्रः—

क्षीराब्धिमथनोद्भूतं वाहनं सवितुः परम् ।
जगदानन्दकर्ता त्वमतः शान्तिं प्रयच्छ मे ॥

ततो नानावेदान्तर्गतनानाशाखाध्यायिभ्यो नानागोत्रेभ्यो नानाशर्मभ्यो ब्राह्मणेभ्यो दीनानाथेभ्योऽन्धपङ्गुभ्यो यथाशक्ति भूयसीं दक्षिणां दातुमहमुत्सृज इति । तत आचार्यादयो ग्रहवेदीसमीपस्थकलशोदकेन मुख्यपीठकलशोकेन द्वारकलशोदकेन च दूर्वापल्लवैरुदङ्मुखास्तिष्ठन्तः प्राङ्मुखं यजमानं सपत्नीकं सापत्यमभिषिञ्चेयुः । अभिषेके पत्नी वामभागे । अभिषेकसमये गीतवाद्यादिमङ्गलतूर्यघोषः कार्यस्तत्र मन्त्राः—समुद्रज्येष्ठा इति चतसृणां वसिष्ठ आपस्त्रिष्टुबभिषेके विनियोगः । ॐ समुद्रज्येष्ठाः० । त्रायन्तामिति तिसृणां सप्तर्षय आपोऽनुष्टुबभिषेके विनियोगः । त्रायन्तामि० । इमा आपः शिव० । देवस्य त्वा० । अक्षीभ्यामिति षण्णां विवहयक्ष्महाऽनुष्टुबभिषेके विनियोगः । ॐ अक्षीभ्यां ते ना० । यक्ष्मं शीर्षण्यं० । ग्रीवाभ्यस्त० । यक्ष्मं दोषण्यं० । आन्त्रेभ्यस्ते० । यक्ष्मं मतस्ना० । ऊरुभ्यां ते अ० । यक्ष्मं श्रोणिभ्यां० । मेहनाद्वनं करणा० । यक्ष्मं सर्वस्मा० । अङ्गादङ्गाल्लो० । यक्ष्मं सर्वस्मा० । अन्ये च स्वस्वशाखोक्ता मन्त्रा ग्राह्याः । पौराणिकास्तु ।

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ २ ॥

वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु मे ( ते ) सदा ॥३॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥ ४ ॥

एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समातरः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥

ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥

ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७ ॥

अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥

सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ९ ॥

एवमभिषिक्तो यजमानः कृतस्नानः पीठदेवतानामुत्तरपूजां कृत्वा यस्य स्मृत्या० मन्त्रहीनं० अपराधसहस्राणीति द्वयोः पीठयोः क्षमाप्य, उत्तिष्ठ ब्रह्मण० अभ्यारभिदद्वयो० यान्तु देव० इति पीठदेवता विसृज्य पीठमाचार्याय दद्यात् । तच्चैवम्—इदं पीठं सोपस्करं सदक्षिणाकं कृतसंकल्पसिद्ध्यर्थमाचार्याय तुभ्यमहं संप्रदद इति दत्त्वा ततोऽग्निं संपूज्य गच्छ गच्छेति विसृज्य ततो मण्डपदेवता द्वारदेवताश्च विसृज्यामुं मण्डपं ध्वजपताकाद्युपस्करसहितं तुभ्यमहं संप्रदद इत्याचार्याय सदस्याय वा दद्यात् । ततः कृतस्य कर्मणः पूर्णतासिद्धये नानागोत्रान्ब्राह्मणान्भोजयिष्ये तेन श्रीपरमेश्वरः प्रीयतामिति कर्मेश्वरार्पणं कृत्वा पुनः पुण्याहवाचनं कृत्वा कर्मच्छिद्रं वाचयित्वा ब्राह्मणान्संपूज्य भोजयित्वा तेभ्य आशिषो गृहीत्वा स्वयमिष्टजनैः सह भुञ्जीत ।

विश्वामित्रवसिष्ठादिकल्पानालोच्य कृत्स्नशः ।
तेभ्यः सारं समुद्धृत्य स्मृतितन्त्रानुसारतः ॥
घारेइत्युपनाम्ना च चित्तपावनसंज्ञिना ।
बाल्लालिना शंकरेण गायत्रीपद्धतिः शुभा ॥
रचिता वा तया देवस्तुष्यतां परमेश्वरः ॥

इति श्रीमच्चित्तपावनकुलाब्धिसंभवघारेइत्युपनामकबल्लालसूरिसूनुशंकर-
विरचिता गायत्रीपुरश्चरणपद्धतिः समाप्ता ॥

---

अथ परार्थगायत्रीजपकर्तॄणां प्रायश्चित्तं हेमाद्रौ–

दशकृज्जपतो देवीं परार्थं कृच्छ्रमीरितम् ।
शतं परार्थं जपतः पराकं परिकीर्तितम् ॥
सहस्रसंख्ययाऽन्यार्थं शुद्ध्यर्थं चान्द्रमाचरेत् ।
अयुतं नियुतं वाऽपि परार्थं धनलोभतः ॥
जपतस्तस्य कर्माणि सद्यः शीर्यन्ति देहतः ।
तस्योपनयनं भूयश्चान्द्रायणचतुष्टयम् ॥
औपासनाग्नेः संत्यागं गायत्रीदानमेव च ।
केशानां वपनं कृत्वा पञ्चगव्यं ततः परम् ॥
परार्थं यावती संख्या गायत्री प्रणवादिका ।
पुनः स्वार्थं जपेत्पश्चात्ततः शुद्धिरवाप्यते ॥
एवं कृत्वा द्विजः शुध्येदन्यथा जलकाकवत् ।
तस्य जन्म वृथा लोके नामधारणमात्रकम् ॥ इति ।

---

